यजुंषा वा एषा क्रियते यजुंषा प-
च्यते यजुंषा वि मुंच्यते यदुखा सा
वा एषैतर्हि यातयांम्नी सा न पुनंः
प्रयुज्येत्याहुरग्ने युक्ष्वा हि ये तवं
युक्ष्वा हि देवहूतमाꣳ इत्युखायां

यजुंषा । वै । एषा । क्रियते । यजुंषा । प-
च्यते । यजुंषा । वीति । मुच्यते । यत् । उखा ।
सा । वै । एषा । एतर्हि । यातयाम्नीति यात-
याम्नी । सा । न । पुनंः । प्रयुज्येति प्र-युज्यां ।
इति । आहुः । अग्ने । युक्ष्व । हि । ये । तवं ।
युक्ष्व । हि । देवहूतमानिति देव-हूतमान् । इति ।
उखायाम् । जुहोति । तेनं । एव । एनाम् । पुनंः ।
प्रेति । युङ्क्ते । तेनं । अयातयाम्नीत्ययात-याम्नी ।

यजुषा वा इत्यादि ॥ उखानाम मन्त्रेण 'वि पाजसा'* इत्यादिना क्रियते । 'धिषणास्त्वा'† इत्यादिना पच्यते । 'मित्र'† इत्यादिना विमुच्यते । सेयमेतर्हि इदानीं उपधानकाले यातयाम्नी निर्गतरसा पुनर्मन्त्रोपयोगात् । 'अन उपधालोपिनः' इति ङीप् । न सा पुनरपि प्रयोज्या पुनरपि तां न प्रयोक्तुमर्हति । अयातयाम्नी चैवं भवति ॥

*सं. ४-१-५. †सं. ४-१-६.

जुहोति तेनैवैनां पुनः प्र युङ्क्ते तेना-
यातयाम्नी यो वा अग्नि योग आ-
गते युनक्ति युङ्क्ते युञ्जानेष्वग्ने॥१५॥
युक्ष्वा हि ये तव युक्ष्वा हि देवहू-
तमाऽइत्याहैष वा अग्नेर्योगस्तेनै-
वैनं युनक्ति युङ्क्ते युञ्जानेषु ब्रह्म वा-
दिनो वदन्ति न्यंङ्ङग्निश्चेतव्या३

[2]यः । वै । अग्निम् । योगे । आगत इत्या–गते । युनक्ति । युङ्क्ते । युञ्जानेषु । अग्ने ॥ १५ ॥ युक्ष्व । हि । ये । तव । युक्ष्व । हि । देवहूतमानिति देव–हूतमान् । इति । आह । एषः । वै । अग्नेः । योगः । तेन । एव । एनम् । युनक्ति । युङ्क्ते । युञ्जानेषु । [3]ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । न्यङ् । अग्निः । चेतव्या३ः । उत्ताना३

[2]यो वा इत्याद्यो अग्नियोगकाले आगते युनक्ति स युञ्जानेषु आत्मानं युङ्क्ते योक्तृव्यपदेशं लभते । कर्त्रभिप्रायमात्मनेपदम् । एते ऋचौ अग्नियोगसंज्ञे । अस्मिन्काले अब्रुवन् अग्नि युनक्ति युञ्जानेषु चात्मानं युङ्क्ते ॥

[3]अथ उत्तानपुरुषशीर्षोपधानार्थं ब्रह्मचारिभिर्विचारं प्रस्तौति— ब्रह्मवादिन इति ॥ ब्रह्मवादिनो विचारं वदन्ति, किं अधोमुखो-

उत्ताना३ इति वयसां वा एष प्रतिमया चीयते यदग्निर्यन्न्यञ्चं चिनुयात्पृष्टित एनमाहुतय ऋच्छेयुर्यदुत्तानं न पतितुं शक्नुयादसुवर्ग्योऽस्य स्यात्प्राचीनमुत्तानम् ॥१६॥

इत्युत्–ताना३ः । इति । वयसाम् । वै । एषः । प्रतिमयेति प्रति–मया । चीयते । यत् । अग्निः । यत् । न्यञ्चम् । चिनुयात् । पृष्टितः । एनम् । आहुतय इत्या–हुतयः । ऋच्छेयुः । यत् । उत्तानमित्युत्–तानम् । न । पतितुम् । शक्नुयात् । असुवर्ग्य इत्यसुवः–ग्यः । अस्य । स्यात् । [4]प्राचीनम् । उत्तानमित्युत्–तानम् ॥ १६ ॥ पुरुषशी-

न्यञ्चेतव्यः ? उत ऊर्ध्वमुखः ? इति । 'विचार्यमाणानाम्' इति प्लुतः । ....पक्षद्वयमिति । वयसामित्यादि । अयमग्निः पक्षिणां प्रतिमया प्रतिच्छन्देन चीयते, नेष्टकासङ्घातमात्रम् । विकृत्यर्थं बहुवचनम् । तत्र तत्तत्प्रतिमाम्नातं अग्निमयं चिनुयात् पृष्टितः पृष्टितयः एनमाहुतयः प्राप्नुयुः । यदुत्तानमिति । चिनुयादित्येव । चयनप्रातिकूल्यात् पतितुं न शक्नुयात् । ततश्चायं यजमानस्य असुवर्ग्यस्स्यात् । 'गोद्व्यचः' इति यत् ॥

[4]समाधत्ते—प्राचीनमित्यादि ॥ पुरुषशीर्षमात्रं प्राचीनमुत्तान-

पुरुषशीर्षमुप दधाति मुखत एवै-
नमाहुतय ऋच्छन्ति नोत्तानं चिनुते
सुवर्ग्योऽस्य भवति सौर्या जुहोति
चक्षुरेवास्मिन्प्रति दधाति द्विर्जुहोति
द्वे हि चक्षुषी समान्या जुहोति

र्षमिति पुरुष–शीर्षम् । उपेति । दधाति । मुः
खतः । एव । एनम् । आहुतय इत्या–हुतयः ।
ऋच्छन्ति । न । उत्तानमित्युत्–तानम् । चिनुते ।
सुवर्ग्य इति सुवः–ग्यः । अस्य । भवति । सौर्या ।
जुहोति । चक्षुः । एव । अस्मिन्न् । प्रतीति । द-
धाति । द्विः । जुहोति । द्वे इति । हि । चक्षुषी इ-

मुपदधाति । मुखत एवाहुतयः प्राप्नुवन्ति । अग्निं तु नोत्तानं चिनुते न्यञ्चमेव च चिनुयात् । तेनायं स्वर्ग्यो भवति ॥

[5]सौर्येति ॥ 'चित्रं देवानां'* इति । ऋचा तस्मिन्पुरुषशिरसि जुहोति । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वे 'उदात्तयणः' इति तृतीयाया उदात्तत्वम् ॥

[6]द्विरिति ॥ द्वित्वाच्चक्षुषः । समान्येति । एकयैवर्चा द्वयोश्चक्षुषोः जुहोति । 'केवलमामक' इति ङीप्, पूर्ववत्तृतीयाया उदात्तत्वम् । समानं एकमेव हि चक्षुरिन्द्रियं अधिष्ठानभेदात्तु

*सं. १-४-४३.

समानꣳ हि चक्षुस्समृद्ध्यै देवासु- रास्संयत्ता आसन्ते वामं वसु सं न्यदधत तद्देवा वामभृताऽवृञ्जत त- द्वामभृतो वामभृत्त्वं यद्वामभृतमुप दधाति वाममेव तया वसु यजमा-

इति । समान्या । जुहोति । समानम् । हि । चक्षुः । समृद्ध्या इति सं-ऋद्ध्यै । देवासुरा इति देव-असुराः । संयत्ता इति सं-यत्ताः । आसन् । ते । वामम् । वसु । सम् । नीति । अदधत । तत् । देवाः । वामभृतेति वाम-भृता । अवृञ्जत । तत् । वामभृत इति वाम-भृतः । वामभृत्त्वमिति वामभृत्-त्वम् । यत् । वामभृतमिति वाम-भृतम् । उपदधातीत्युप-दधाति । वामम् । एव । तया । वसु । यज-

भिन्नमिव लक्ष्यते । समृद्ध्या इति । अनुरूपत्वाय भवति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[7]देवासुरा इत्यादि ॥ असुराः वामं वननीयं चयनरसं न्यदधत गूढं क्वचित्संभूय स्थापितवन्तः । देवास्तु तद्वामभृन्नाम्न्या इष्टकया अवृञ्जत आददत । तत् वामं वसु भ्रियतेऽनयेति वामभृत् । करणे क्विप्, 'ह्रग्रहोर्भः' इति भत्वम् ॥

नो भ्रातृव्यस्य वृङ्क्ते हिरण्यमूर्ध्नी भवति ज्योतिर्वै हिरण्यं ज्योतिर्वामं ज्योतिषैवास्य ज्योतिर्वामं वृङ्क्ते द्वियजुर्भवति प्रतिष्ठित्यै ॥ १७ ॥

मानः । भ्रातृव्यस्य । वृङ्क्ते । [8]हिरण्यमूर्ध्नीति हिरण्य–मूर्ध्नी । भवति । ज्योतिः । वै । हिरण्यम् । ज्योतिः । वामम् । ज्योतिषा । एव । अस्य । ज्योतिः । वामम् । वृङ्क्ते । द्वियजुरिति द्वि–यजुः । भवति । प्रतिष्ठित्या इति प्रति–स्थित्यै ॥ १७ ॥

युञ्जानेष्वग्ने प्राचीनमुत्तानं वामभृतं चतुर्विंशतिश्च ॥ ३ ॥

[8]हिरण्यमूर्ध्नीति ॥ हिरण्यं मूर्धि उपरिभागे यस्याः । पूर्ववत् ङीप् । ज्योतिरिति । हिरण्यं द्योतनशीलं वामं वसु । तस्मात्तादृशेन तादृशं वसु भ्रातृव्यस्याददते । द्वियजुरिति । द्वाभ्यां मन्त्राभ्यां 'यास्ते अग्ने सूर्ये रुचः'* 'या वो देवाः सूर्ये रुचः'* इत्येताभ्यां यजुष्कृता-वयजुष्कृति वा । त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् । प्रतिष्ठित्या इति । द्वित्वलाभाद्गतः प्रकृतिस्वरत्वम् ॥

इति पञ्चमे पञ्चमे तृतीयोनुवाकः.

———

*सं. ४-२-६.

आपो वरुणस्य पत्नय आसन्ता अग्निरभ्यध्यायत्ताः समभवत्तस्य रेतः पराऽपतत्तदियमभवद्यद्द्वितीयं पराऽपतत्तदसावभवदियं वै विराडसौ स्वराड्यद्विराजावुपदधातीमे एवोप

[1]आपः । वरुणस्य । पत्नयः । आसन् । ताः । अग्निः । अभीति । अध्यायत् । ताः । समिति । अभवत् । तस्य । रेतः । परेति । अपतत् । तत् । इयम् । अभवत् । यत् । द्वितीयम् । परापतदिति परा–अपतत् । तत् । असौ । अभवत् । इयम् । वै । विराडिति वि–राट् । असौ । स्वराडिति स्व–राट् । यत् । विराजाविति वि–राजौ । उपदधातीत्युप–दधाति । इमे इति । एव । उपेति । धत्ते ।

[1]उक्ताः 'विराट् ज्योतिरधारयत्'* इत्याद्यास्तिस्र इष्टकाः । आपो वरुणस्येत्यादिभिः विराट्स्वराजोस्स्तुतिः । अभ्यध्यायत् अकामयत समभवत् मिथुनभावेन अभुङ्क्त । तस्येत्यादि । गतम् । द्यावापृथिवीत्वेन विराट्स्वराजोरिष्टकयोस्स्तुतिः । तस्माद्विराजोपधानेन द्यावापृथिव्यावेव उपहिते । इमे इति । इयञ्चासौ च इमे । 'त्यदादीनां यत्परम्' इति इदमश्शेषः ॥

*सं. ४-३-९.

धत्ते यद्वा असौ रेतः सिञ्चति तद-
स्यां प्रति तिष्ठति तत्प्र जायते ता
ओषधयः ॥ १८ ॥ वीरुधो भवन्ति
ता अग्निरत्ति य एवं वेद प्रैव जा-
यतेऽन्नादो भवति यो रेतस्वी स्या-
त्प्रथमायां तस्य चित्यामुभे उप
दध्यादिमे एवास्मै समीची रेतः सि-

[2]यत् । वै । असौ । रेतः । सिञ्चति । तत् । अ-
स्याम् । प्रतीति । तिष्ठति । तत् । प्रेति । जायते ।
ताः । ओषधयः ॥ १८ ॥ वीरुधः । भवन्ति । ताः ।
अग्निः । अत्ति । यः । एवम् । वेद । प्रेति । ए-
व । जायते । अन्नाद इत्यन्न–अदः । [3]भवति । यः ।
रेतस्वी । स्यात् । प्रथमायाम् । तस्य । चित्याम् ।
उभे इति । उपेति । दध्यात् । इमे इति । एव ।
अस्मै । समीची इति । रेतः । सिञ्चतः । यः ।

[2]यद्वा इत्यादि ॥ तत उदकं तत्पृथिव्यां प्रतिष्ठितं ओषध्यादिभावेन जायते ता अग्नेरदनीया भवन्तीति विराडुपधानेन अग्निरेव उपधार्य इति । य एवमिति । विदुषा विदित्वा वा कर्तव्यमिति ॥

[3]रेतस्वीति ॥ प्रजननसमर्थः । प्रजायत इत्येके । प्रभूतरेता इवेत्यन्ये । प्रथमायामित्यादि । गतम् । समीची इति । संगते

अतो यस्मिन्त्सिक्तरेतास्स्यात्प्रथमायां तस्य चित्यामन्यामुप दध्यादुत्तमायामन्याꣳ रेत एवास्य सिक्तमाभ्यामुभयतः परि गृह्णाति संवथ्सरं न कम् ॥ ११ ॥ चन प्रत्यवरोहेन्न हीमे कं चन प्रत्यवरोहतस्तदेनयोर्व्रतं

सिक्तरेता इति सिक्त–रेताः । स्यात् । प्रथमायाम् । तस्य । चित्याम् । अन्याम् । उपेति । दध्यात् । उत्तमायामित्युत्–तमायाम् । अन्याम् । रेतः । एव । अस्य । सिक्तम् । आभ्याम् । उभयतः । परीति । गृह्णाति । [4]संवत्सरमिति सं–वत्सरम् । न । कम् ॥ ११ ॥ चन । प्रत्यवरोहेदिति प्रति–अवरोहेत् । न । हि । इमे इति । कम् । चन । प्रत्यवरोहत इति प्रति–अवरोहतः । तत् । एन-

द्यावापृथिव्यौ सम्यग्वा रेतस्सेचयतः । ‘वा छन्दसि’ इति पूर्वसवर्णदीर्घत्वम् । सिक्तरेता इति । बहुप्रजाः स्थविरो वा । आभ्यामिति । द्यावापृथिवीभ्यां उभयतःस्वसिक्तं रेतः प्रजारूपं परिगृह्णाति ॥

[4]संवत्सरमित्यादि ॥ न किञ्चिदपि प्रत्युत्तिष्ठेत् एते उपधाय । हेतुमाह—न हीति । द्यावापृथिव्यौ न कञ्चिदपि प्रत्युद्गच्छतः ।

यो वा अपशीर्षाणमग्निं चिनुतेऽ-
पशीर्षाऽमुष्मिन्लोके भवति य-
स्सशीर्षाणं चिनुते सशीर्षाऽमु-
ष्मिन्लोके भवति चित्तिं जुहोमि
मनसा घृतेन यथा देवा इहागम-
न्वीतिहोत्रा ऋतावृधस्समुद्रस्य व-

योः । व्रतम् । [5]यः । वै । अपशीर्षाणमित्यप-शीर्षाणम् । अग्निम् । चिनुते । अपशीर्षेत्यप-शीर्षा । अमुष्मिन्न् । लोके । भवति । यः । स-शीर्षाणमिति स-शीर्षाणम् । चिनुते । सशीर्षेति स-शीर्षा । अमुष्मिन्न् । लोके । भवति । [6]चित्तिम् । जुहोमि । मनसा । घृतेन । यथा । देवाः । इह । आगमन्नित्या-गमन्न् । वीतिहोत्रा इति वीति-होत्राः । ऋतावृध इत्यृत-वृधः । समुद्रस्य ।

---

तत्खल्वनयोर्व्रतं नियतं चेष्टितम् । तस्मात्तयोरुपधात्राऽपि तद्वृत्तेन युक्तं भवितुमिति भावः ॥

[5]यो वा इत्यादि ॥ स्वयमातृण्णामुपधाय तदवकाशे होमविधिः । 'शीर्षञ्छन्दसि' इति शिरसश्शीर्षन्भावः ॥

[6]'चित्तिं जुहोमि' इत्यादिना होमोग्नेश्शिरःप्राधान्यात् । मन्त्रार्थस्तु—इयञ्चातिजगती पञ्चपदा । चित्तिं जुहोमि आददे वशी-

युनस्य पत्मञ्जुहोमि विश्वकर्मणे। विश्वाऽहाऽमर्त्यꣳ हविरिति स्वयमातृण्णामुपधाय जुहोति ॥२०॥ एतद्वा अग्नेश्शिरस्सशीर्षाणमेवाग्निं चिनुते सशीर्षाऽमुष्मिंल्लोके भव-

वयुनस्य । पत्मन्न् । जुहोमि । विश्वकर्मण इति विश्व-कर्मणे । विश्वा । अहा । अमर्त्यम् । हविः । इति । स्वयमातृण्णामिति स्वयं-आतृण्णाम् । उपधायेत्युप-धाय । जुहोति ॥ २० ॥ एतत् । वै । अग्नेः । शिरः । सशीर्षाणमिति स-शीर्षाणम् ।

करोमि, देवानां तेषां वक्ष्यमाणत्वान्मननीयेन मनोहरेणानेन घृतेन यथा देवा वशीकृतचित्ताः इहास्मिन् आगमन् आगच्छेयुः तदनुरूपम् । छान्दसो लुङ् । देवा विशेष्यन्ते—वीतिहोत्राः वेतिर्गतिकर्मा होतव्यं होत्रं हविः कमनीयहविषः ऋतस्य यज्ञस्य वर्धयितारः । अन्येषामपि दृश्यते । किमर्थं समुद्रस्य उदकस्य वयुनस्य कमनीयस्य पत्मन् पतननिमित्तं वृष्ट्यर्थं जुहोमि । निमित्तात् सप्तम्याः 'सुपां सुलुक्' इति लुक् । यद्वा—समुद्रमन्तरिक्षं, इह तु समुद्रशब्देन स्वयमातृण्णोच्यते 'अन्तरिक्षं वै स्वयमातृण्णा'* इति । तस्याः पतनार्थं स्थैर्यार्थं जुहोमि; यथा मशकार्थो धूम इति मशकार्थत्वं धूमस्य नोपपद्यत इति तन्निवृत्तौ मशकशब्दः; एवमत्रापि तन्निवृत्तौ पत्मशब्दः । वि-

*सं. ५-१-२.

ति य एवं वेदं सुवर्गाय वा एष
लोकाय चीयते यदग्निस्तस्य यदयं-
थापूर्वं क्रियतेऽसुवर्ग्यमस्य तथ्सुव-
र्ग्योऽग्निश्चितिमुपधायाभि मृंशेच्चित्ति-

एव । अग्निम् । चिनुते । सशरीरेति स-शरीरा । अमुष्मिन्न् । लोके । भवति । यः । एवम् । वेद । [7]सुवर्गायेति सुवः-गाय । वै । एषः । लोकाय । चीयते । यत् । अग्निः । तस्य । यत् । अयंथापूर्व-मित्ययथा-पूर्वम् । क्रियते । असुवर्ग्यमित्यसुवः-ग्यम् । अस्य । तत् । सुवर्ग्य इति सुवः-ग्यः । अग्निः । चितिम् । उपधायेत्युप-धाय । अभीति ।

श्वकर्मणे विश्वस्य कर्त्रे देवाय विश्वाहा विश्वान्यहानि अमर्त्य-मविनाशशीलमिदं हविर्जुहोमीति । 'शेच्छन्दसि' इति लोपः ॥

[7]सुवर्गायेत्यादिश्चित्यभिमर्शनविधिः । अयथापूर्वं अयथाविधि यथार्हधर्मैर्न कृतं* तथा यत्क्रियते अग्नेः ततः असुवर्ग्यं अस्वर्गनिमित्तं स्यात् यजमानस्य । अग्निश्चाग्यमस्य स्वर्ग इष्यते, तदर्थं चीयमान-त्वात् । तस्याश्चितिं 'चित्तिं' इति त्रिष्टुभा चितिमुपधायानन्तरं अभिमृशेच्चितिक्लृप्तिरित्याख्या । अर्थस्तु—चित्तिमचित्तिं प्रतीतिं अप्र-तीतिं चास्माकं विचिनवत् विचिनुयात् स्खलितास्खलितं निरूप्य स्वयमेव परिहरत्विति भावः । पूर्ववच्छेद्वाडागमः । यस्मादयं विद्वान् ज्ञातुं समर्थः वीतानि वृजिनानि च । कानि तानि—विकलानि कर्माणि वृजिनानि

*यथाह्यादुर्वै निकृतं.

मचिंत्तिं चिनवद्वि विद्वान्पृष्ठेव वीता
वृजिना च मर्तान्राये च नस्स्वप-
त्यायं देव दितिं च रास्वादितिमुरु-
ष्येतिं यथापूर्वमेवैनामुपं धत्ते प्राञ्चं-
मेनं चिनुते सुवर्ग्योऽस्य भवति॥२१॥

मृळोत् । चित्तिम् । अचित्तिम् । चिनवत् । वीति ।
विद्वान् । पृष्ठा । इव । वीता । वृजिना । च ।
मर्तान् । राये । च । नः । स्वपत्यायेति सु-
अपत्याय । देव । दितिम् । च । रास्व । अदितिम् ।
उरुष्य । इति । यथापूर्वमिति यथा-पूर्वम् । एव ।
एनाम् । उपेति । धत्ते । प्राञ्चम् । एनम् । चिनुते ।
सुवर्ग्य इति सुवः-ग्यः । अस्य । भवति ॥२१॥

ओषधयः कं जुहोति स्वपत्यायाष्टादश च ॥४॥

च । उभयत्र 'छन्दसि' इति लोपः । किञ्च—मर्ता मरणधर्मश्च अस्मान् भज्यमानप्रमादान्विद्वान् क्षमाकारणमिदम् । किमिव पृष्ठा पृष्ठानि उपलक्षणत्वात् स्वाङ्गानि च सर्वाणि अपकर्माणि प्रत्यक्षं वेदितुं समर्थ इति । स त्वं हे देव नः अस्माकं राये धनवत्त्वाय स्वपत्याय शोभनापत्यत्वाय दितिं रास्व यद्देयं तद्देहि । ददातेः कर्मणि क्तिन् छान्दसमित्त्वम् । रातेर्व्यत्ययेन आत्मनेपदम् । अदितिं अखण्डनं च उरुष्य रक्षां कुरुष्वेति यावत् । उरुष्यतिः कण्ड्वादिः । 'द्यतिस्यति' इत्यादिना द्यतेरित्त्वम् । प्राञ्चमिति । प्राञ्चमग्निं चिनुते स्वर्ग्यो भवति ॥

इति पञ्चमे पञ्चमे चतुर्थोऽनुवाकः.

विश्वकर्मा दिशां पतिस्स नः पशू-
न्पातु सोऽस्मान्पातु तस्मै नमः प्र-
जापती रुद्रो वरुणोऽग्निर्दिशां पति-
स्स नः पशून्पातु सोऽस्मान्पातु त-
स्मै नम एता वै देवता एतेषां प-
शूनामधिपतयस्ताभ्यो वा एष आ
वृश्चयते यः पशुशीर्षाण्युपदधाति

[1]विश्वकर्मेति विश्व-कर्मा । दिशाम् । पतिः । सः । नः । पशून् । पातु । सः । अस्मान् । पातु । तस्मै । नमः । प्रजापतिरिति प्रजा-पतिः । रुद्रः । वरुणः । अग्निः । दिशाम् । पतिः । सः । नः । पशून् । पातु । सः । अस्मान् । पातु । तस्मै । नमः । [2]एताः । वै । देवताः । एतेषाम् । पशूनाम् । अधिपतय इत्यधि-पतयः । ताभ्यः । वै । एषः । एति । वृश्च्यते । यः । पशुशीर्षाणीति

[1]पशुशीर्षेषु क्रमेण हिरण्येष्टकोपधानमन्त्राः—विश्वकर्मा दिशां पतिरित्यादयः । विश्वकर्मा वायुरादित्यो वा दिशां पतिः सोऽस्माकं पशून्पातु अस्मांश्च पातु तस्मै नमः । एवं प्रजापत्यादिचतुर्ष्वपि दिशां पतिरित्यनुषज्यते ॥

[2]एता वा इत्यादि ॥ एतेषां ब्राह्मणम् । एता विश्वकर्मादयो

हिरण्येष्टका उप दधात्येताभ्य एव देवताभ्यो नमस्करोति ब्रह्मवादिनः ॥ २२ ॥ वदन्त्यग्नौ ग्राम्यान्पशून्प्र दधाति शुचाऽऽरण्यानर्पयति किं तत उच्छिꣳषतीति यद्धिरण्येष्टका उपदधात्यमृतं वै हिरण्यममृतेनैव

पशु–शीर्षाणि । उपदधातीत्युप–दधाति । हिरण्येष्टका इति हिरण्य–इष्टकाः । उपेति । दधाति । एताभ्यः । एव । देवताभ्यः । नमः । करोति । [3]ब्रह्मवादिन इति ब्रह्म–वादिनः ॥ २२ ॥ वदन्ति । अग्नौ । ग्राम्यान् । पशून् । प्रेति । दधाति । शुचा । आरण्यान् । अर्पयति । किम् । ततः । उदिति । शिꣳषति । इति । यत् । हिरण्येष्टका इति हिरण्य–इष्टकाः । उपदधातीत्युप–दधाति । अमृतम् । वै । हिरण्यम् । अमृतेन । एव । ग्राम्ये-

देवाः एतेषां पशूनां अधिपतयः एषां शिरांस्युपस्थितानि । ताभ्य इत्यादि । गतम् ॥

[3]ब्रह्मवादिन इत्यादि ॥ ग्राम्याः पशवोऽग्नौ निधीयन्ते दह्यन्ते आरण्यास्तु शोकेन योज्यन्ते । यथोक्तं—'ग्राम्येभ्य एव पशुभ्य आरण्यान् पशून् शुचमनूत्सृजति '* इति । तदिदानीं (दनेन) ग्राम्यार-

*सं. ५-२-९.

ग्राम्येभ्यः पशुभ्यो भेषजं करोति
नैनान्हिनस्ति प्राणो वै प्रथमा
स्वयमातृण्णा व्यानो द्वितीयाऽपा-
नस्तृतीयाऽनु प्राण्यात्प्रथमाꣳ स्व-
यमातृण्णामुपधाय प्राणेनैव प्राण-
ꣳ समर्धयति व्यन्यात् ॥ २३ ॥
द्वितीयामुपधाय व्यानेनैव व्यानꣳ

भ्यः । पशुभ्य इति पशु-भ्यः । भेषजम् । करोति । न । एनान् । हिनस्ति । [4]प्राण इति प्र-अनः । वै । प्रथमा । स्वयमातृण्णेति स्वयं-आतृण्णा । व्यान इति वि-अनः । द्वितीया । अपान इत्यप-अनः । तृतीया । अनु । प्रेति । अन्यात् । प्रथमाम् । स्वयमातृण्णामिति स्वयं-आतृण्णाम् । उपधायेत्युप-धाय । प्राणेनेति प्र-अनेन । एव । प्राणमिति प्र-अनम् । समिति । अर्धयति । वीति । अन्यात् ॥ २३ ॥ द्वितीयाम् । उपधायेत्युप-धाय । व्यानेनेति वि-अनेन । एव । व्यानमि-

ण्येभ्यः किमुच्छिंछपति किं पशुजातं शेषयति पशुशिरसामुपधाने । हन्त सर्वमपि पशुजातं विनाशितं भवतीति । यदित्यादि समाधानं गतम् ॥

[4]प्राणो वा इत्यादिना स्वयमातृण्णानां प्राणादित्वेन स्तुतिः ।

समर्धयत्यपान्यात्तृतीयामुपधायापा-
नेनैवापानꣳ समर्धयत्यथो प्राणैरे-
वैनꣳ समिन्धे भूर्भुवस्सुवरिति स्व-
यमातृण्णा उप दधातीमे वै लोका-
स्स्वयमातृण्णा एताभिः खलु वै
व्याहृतीभिः प्रजापतिः प्राजायत

ति वि--अनम् । समिति । अर्धयति । अपेति । अन्यात् । तृतीयाम् । उपधायेत्युप—धाय । अपानेनेत्यप—अनेन । एव । अपानमित्यप—अनम् । समिति । अर्धयति । अथो इति । प्राणैरिति प्र—अनैः । एव । एनम् । समिति । इन्धे । [5]भूः । भुवः । सुवः । इति । स्वयमातृण्णा इति स्वयं—आतृण्णाः । उपेति । दधाति । इमे । वै । लोकाः । स्वयमातृण्णा इति स्वयं—आतृण्णाः । एताभिः । खलु । वै । व्याहृतीभिरिति व्याहृति-भिः । प्रजापतिरिति प्रजा—पतिः । प्रेति । अजायत ।

प्राणादयं इत्युक्ताः अनुप्राण्यादिविधिः । अथो इति । यजमानं च प्राणैस्समृद्धं करोति ॥

[5]भूरित्यादि ॥ लोकत्रयात्मिका व्याहृतयः स्वयमातृण्णा च यथोक्ता । किञ्चैताभिर्व्याहृतीभिः प्रजापतिः प्राजायत इत्यादि । गतम् ॥

यदेताभिर्व्याहृतीभिस्स्वयमातृण्णा
उपदधातीमानेव लोकानुपधायैषु ॥
२४ ॥ लोकेष्वधि प्र जायते प्राणा-
य व्यानायापानाय वाचे त्वा चक्षु-
षे त्वा तया देवतयाऽङ्गिरस्वद्ध्रुवा
सीदाग्निना वै देवास्सुवर्गं लोकम-

यन् । एताभिः । व्याहृतीभिरिति व्याहृति-भिः । स्वयमातृण्णा इति स्वयं-आतृण्णाः । उपदधातीत्युप-दधाति । इमान् । एव । लोकान् । उपधायेत्युप-धाय । एषु ॥ २४ ॥ लोकेषु । अधि । प्रेति । जायते । [6]प्राणायेति प्र-अनाय । व्यानायेति वि-अनाय । अपानायेत्यप-अनाय । वाचे । त्वा । चक्षुषे । त्वा । तया । देवतया । अङ्गिरस्वत् । ध्रुवा । सीद । [7]अग्निना । वै । देवाः । सुवर्गमिति

[6]प्राणायेत्यादिस्तयादेवतस्य विशेषो गतः ॥

[7]अग्निनेत्यादि ॥ अजिगांसन् गन्तुमैच्छन् । एतैः । 'सनि च' इति गमिरादेशः, 'अज्झनगमां सनि' इति दीर्घत्वम् । तेन स्वयमातृण्णारहितेन । एता इति । प्राणाय व्यानाय वाच इति प्राणादिषु प्रत्येकत्वाच्चक्षुषे त्वेत्यादेः अनुषङ्गः । तेन सर्वतश्चक्षुषेत्यनेन दिक्षूपहितचतुस्स्वयमातृण्णेन सर्वास्वपि दिक्षु 'चक्षुषे त्वा'

जिगाꣳसन्तेन पतितुं नाशंकुवन्त एताश्चतस्रस्स्वयमातृण्णा अपश्य- न्ता दिक्षूपादधत तेन सर्वतश्चक्षुषा सुवर्गं लोकमायन् यच्चतस्रस्स्वय- मातृण्णा दिक्षूपदधाति सर्वतश्चक्षु- षैव तदग्निना यजमानस्सुवर्गं लो- कमेति ॥ २५ ॥

सुव:–गम् । लोकम् । अजिगाꣳसन् । तेन । प- तितुम् । न । अशक्नुवन् । ते । एताः । चतस्रः । स्वयमातृण्णा इति स्वयं–आतृण्णाः । अपश्यन् । ताः । दिक्षु । उपेति । अदधत । तेन । सर्वतश्चक्षु- षेति सर्वतः–चक्षुषा । सुवर्गमिति सुव:–गम् । लोकम् । आयन् । [8]यत् । चतस्रः । स्वयमातृण्णा इति स्वयं–आतृण्णाः । दिक्षु । उपदधातीत्युप– दधाति । सर्वतश्चक्षुषेति सर्वतः–चक्षुषा । एव । तत् । अग्निना । यजमानः । सुवर्गमिति सुव:– गम् । लोकम् । एति ॥ २५ ॥

ब्रह्मवादिनो व्यन्यादेषु यजमानस्त्रीणि च ॥५॥

---

इत्यादिचक्षुष्मन्मन्त्रसहितेन एतेन चक्षुषे त्वेत्यादेः सर्वानुषङ्गतां दर्शयति ॥

[8]यदित्यादि ॥ गतम् ॥

इति पञ्चमे पञ्चमे पञ्चमः.

अग्न आ याहि वीतय इत्याहाह्वै-
तैवैनमग्निं दूतं वृणीमह इत्याह हू-
त्वैवैनं वृणीतेऽग्निनाऽग्निस्समिध्यत
इत्याह समिन्ध एवैनमग्निर्वृत्राणि
जङ्घनदित्याह समिद्ध एवास्मिन्नि-
न्द्रियं दधात्यग्नेस्स्तोमं मनामह ।

[1]अग्ने । एति । याहि । वीतये । इति । आह । अह्वत । एव । एनम् । अग्निम् । दूतम् । वृणीमहे । इति । आह । हूत्वा । एव । एनम् । वृणीते । अग्निना । अग्निः । समिति । इध्यते । इति । आह । समिति । इन्धे । एव । एनम् । अग्निः । वृत्राणि । जङ्घनत् । इति । आह । समिद्ध इति सं-इद्धे । एव । अस्मिन्न् । इन्द्रियम् । दधाति । अग्नेः ।

---

[1]अग्न आ याहीत्यादिर्विभक्तीनां विधिः । पञ्चस्वहस्सु पञ्च चितयः । तत्रान्वहं चितेर्विभागार्था एता ऋचः । तत्र 'अग्न आयाहि'* इत्यनया प्रथमेऽह्नि प्रथमायां चितौ चयनादिनमग्निमाह्वयते आह्वयति । छान्दसो लुङ्, 'आत्मनेपदेष्वन्यतरस्याम्' इत्यङ् । ततो हूत्वा आहूय द्वितीयायां चितौ अग्निं दूतं वृणीते अग्निमात्मसात्करोति । ततस्तृतीयायां 'अग्निनाऽग्निस्समिध्यते'† इति एनमग्निं समिन्धे दीपयति ततश्चतुर्थ्यां 'अग्निर्वृत्राणि'‡ इति समिन्धेऽग्नौ इन्द्रि-

---

*तै. ब्रा. ३-५-२. †सं. ३-५-११. ‡सं. ४-३-१३.

इत्याह मनुत एवैनमेतानि वा अ-
ह्नाꣳ रूपाणि ॥ २६ ॥ अन्वहमेवै-
नं चिनुतेऽवाह्नाꣳ रूपाणि रुन्धे ब्र-
ह्मवादिनो वदन्ति कस्मात्सत्याद्या-
तयाम्नीरन्या इष्टका अयातयाम्नी

स्तोमम् । मनामहे । इति । आह । मनुते । एव । एनम् । [2]एतानि । वै । अह्नाम् । रूपाणि ॥ २६ ॥ अन्वहमित्यनु–अहम् । एव । एनम् । चिनुते । अवेति । अह्नाम् । रूपाणि । रुन्धे । [3]ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । कस्मात् । सत्यात् । यातयाम्नीरिति यात–याम्नीः । अन्याः । इष्टकाः । अयातयाम्नीत्ययात–याम्नी । लोकंपृणेति लोकं–पृ

र्यं वीर्यं दधाति । ततः पञ्चम्यामग्नेस्स्तोमं मनामहे इति एतं महावीर्यं मनुते जानाति स्तोतुं धारयितुं वा ॥

[2]एतानि वा इत्यादि ॥ अहस्सम्बन्धीनि चितिरूपाणि चितिवैलक्षण्यात्मकानि । अन्वहमिति । अन्वहमेताभिश्चयनादह्नां रूपाण्यवरुन्धे विशिष्टां शरीरावस्थां लभते यजमानः ॥

[3]ब्रह्मवादिन इत्यादि ॥ अत्र यत्र यातयाम्न्यो गतरसाः अन्या इष्टका अपस्यादयः सकृदुपहिता न पुनरुपधीयन्ते लोकंपृणा तु अयातयाम्नी यतः पुनःपुनरुपधीयते तदेतद्वैचित्र्यं कस्मात्कारणादिति ब्रह्मवादिनः प्रश्नं वदन्ति । 'अन उपधालोपिनः' इति ङीप् ॥

लोकंपृणेत्यैन्द्राग्नी हि बार्हस्पत्ये-
ति ब्रूयादिन्द्राग्नी च हि देवानां बृह-
स्पतिश्चायातयामानोऽनुचरवती भ-
वत्यजामित्वायानुष्टुभाऽनु चरत्या-
त्मा वै लोकंपृणा प्राणोऽनुष्टुप्तस्मा-

णा । इति । [4]ऐन्द्राग्नीत्यैन्द्र-अग्नी । हि । बार्हस्प-
त्या । इति । ब्रूयात् । इन्द्राग्नी इतीन्द्र-अग्नी । च ।
हि । देवानाम् । बृहस्पतिः । च । अयातयामान इ-
त्ययात-यामानः । अनुचरवतीत्यनुचर-वती । भ-
वति । अजामित्वायेत्यजामि-त्वाय । अनुष्टुभेत्य-
नु-स्तुभा । अन्विति । चरति । आत्मा । वै । लो-
कंपृणेति लोकं-पृणा । प्राण इति प्र-अनः । अ-

[4]ऐन्द्राग्नी इत्यादि ॥ ऐन्द्राग्नी बार्हस्पत्या च लोकंपृणा । इन्द्राग्नी बृहस्पतिश्च देवानां मध्ये अयातयामानः तस्मादयातयाम्नी तेभ्य उत्तरं ब्रूयात् ॥

[5]अनुचरवतीति ॥ सूददोहसा तद्वती भवति । अजामित्वायेति । एकाकिनो हि पुनःपुनः प्रवृत्तौ जामित्वमालस्यं स्यात् । अनुष्टुभेति । अनुचरो विशेष्यते । 'ता अस्य सूददोहसः '* इत्येतया अनुष्टुभा पश्चादुच्चार्यमाणया लोकंपृणामनुवर्तते अध्वर्युरुपधीयमानाम् ।

*सं. ४-२-४.

त्प्राणस्सर्वाण्यङ्गान्यनु चरति ता अस्य सूददोहसः ॥ २७ ॥ इत्याह तस्मात्परुंषिपरुषि रसस्सोमः श्रीणन्ति पृश्नय इत्याहान्नं वै पृश्नयन्नमेवावं रुन्धेऽर्को वा अग्निरर्कोऽन्नम-

नुष्टुबित्यनु-स्तुप् । तस्मात् । प्राण इति प्र-अनः । सर्वाणि । अङ्गानि । अन्विति । चरति । ता: । अस्य । सूददोहस इति सूद-दोहसः ॥ २७ ॥ इति । आह । तस्मात् । परुंषिपरुषीति परुंषि-परुषि । रसः । सोमम् । श्रीणन्ति । पृश्नयः । इति । आह । अन्नम् । वै । पृश्निः । अन्नम् । एव । अवेति । रुन्धे । अर्कः । वै । अग्निः । अर्कः । अन्नम् । अन्नम् । एव । अवेति । रुन्धे ।

आत्मा वा इत्यादि । आत्मस्थानीयां लोकंपृणां प्राणस्थानीया अनुष्टुक् यस्मादनुचरति तस्मात्प्राणस्सर्वाण्यङ्गान्यनुचरति ॥

ता अस्येति ॥ मन्त्रावयवानां स्तुतिः । परुषिपरुषीति । पर्वणिपर्वणि सोमस्य रसो दुह्यते 'सूददोहसः'* इति लिङ्गात् ॥

'अन्नं वा' इति ॥ शुक्लत्वात् अन्नाख्या वा तत्र साधनत्वात् सूददोहस उच्यन्ते । अर्को वा इति । अर्चनीयत्वादग्निरर्कः । अर्चनत्वादन्नम् ॥

*सं. ४-२-४.

न्नमेवाव रुन्धे जन्मन्देवानां विशः-
स्त्रिष्वा रोचने दिव इत्याहेमानेवा-
स्मै लोकाञ्ज्योतिष्मतः करोति यो
वा इष्टकानां प्रतिष्ठां वेद प्रत्येव
तिष्ठति तया देवतयाऽङ्गिरस्वद्ध्रुवा

[8]जन्मन्न् । देवानाम् । विशः । त्रिषु । एति । रोचने । दिवः । इति । आह । इमान् । एव । अस्मै । लोकान् । ज्योतिष्मतः । करोति । [9]यः । वै । इष्टकानाम् । प्रतिष्ठामिति प्रति—स्थाम् । वेद । प्रतीति । एव । तिष्ठति । तया । देवतया । आङ्गिरस्वत् । ध्रुवा । सीद । इति । आह । एषा । वै । इष्टकानाम् ।

[8]इमानेवेति ॥ 'त्रिष्वा रोचने'* इति लिङ्गात् । अनुचरवतीलोकंपृणयोः इतरेभ्यो विशेषवचनादेतद्विपर्येव सूददोहाः । यो वा इष्टकानामिति सामान्यवचनात्तद्देवतं सर्वविषयमिति वेदितव्यम् ॥

[9]यो वा इत्यादि ॥ गतम् । एतेनोपहिता इष्टकाः प्रतिष्ठिता भवन्ति । एषेति । प्रतिष्ठापेक्षया लिङ्गनिर्देशः ॥

इति पञ्चमे पञ्चमे षष्ठोनुवाकः ॥

*सं. ४-२-४.

सीदेत्याहैषा वा इष्टकानां प्रतिष्ठा य
एवं वेद प्रत्येव तिष्ठति ॥ २८ ॥
सुवर्गाय वा एष लोकाय चीयते
यदग्निर्वज्रं एकादशिनी यदग्नावेका-
दशिनीं मिनुयाद्वज्रेणैनꣳ सुवर्गा-
ल्लोकादन्तर्दध्याद्यन्न मिनुयात्स्वरु-

प्रतिष्ठेति प्रति–स्था । यः । एवम् । वेद । प्रतीति । एव । तिष्ठति ॥ २८ ॥

रूपाण्येष सूददोहसस्तया षोडश च ॥ ६ ॥

सुवर्गायेति सुवः–गाय । वै । एषः । लोकाय । चीयते । यत् । अग्निः । वज्रः । एकादशिनी । यत् । अग्नौ । एकादशिनीम् । मिनुयात् । वज्रेण । एनम् । सुवर्गादिति सुवः–गात् । लोकात् । अन्तः । दध्यात् । यत् । न । मिनुयात् ।

सुवर्गायेत्यादि ॥ वज्रस्थानीया एकादशिनी एकादशानां यूपानां संहतिः । एकादशावयवा अस्येति 'शन्शतोर्डिनिः' इति डिनिप्रत्ययः । यदग्नौ ताम्मिनुयात् प्रक्षिपेत् । डुमिञ् प्रक्षेपणे । वज्रेणान्तर्धायकेन यजमानमग्निं वा सुवर्गादन्तर्दध्यात् स्वर्गादन्तर्हितं कुर्यात् । तया मितया स्वर्गोन्तर्हितस्स्यात् । अथ यदि न मिनुयात् स्वरुमद्भिर्यूपैः पशुसाधनैः निवर्तमानैः पशून्व्यर्धयेत्

भिः पशून्व्यर्धयेदेकयूपं मिनोति नैनं वज्रेण सुवर्गाल्लोकादन्तर्दधाति न स्वरुभिः पशून्व्यर्धयति वि वा एष इन्द्रियेण वीर्येणर्ध्यते योऽग्निं चिन्वन्नधि क्रामत्यैन्द्रिया ॥ २१ ॥

स्वरुभिरिति स्वरु–भिः । पशून् । वीति । अर्धयेत् । एकयूपमित्येक–यूपम् । मिनोति । न । एनम् । वज्रेण । सुवर्गादिति सुवः–गात् । लोकात् । अन्तर्दधातीत्यन्तः–दधाति । न । स्वरुभिरिति स्वरु–भिः । पशून् । वीति । अर्धयति । [2]वीति । वै । एषः । इन्द्रियेण । वीर्येण । ऋध्यते । यः । अग्निम् । चिन्वन् । अधिक्रामतीत्यधि–क्रामति ।

अवयवशः कुर्यात् । स्वरुशब्दान्मत्वर्थीयो लुप्यते । स्वरणादेव वाऽग्राणि तेषामपि पशुसाधनत्वात् । तस्मादेकयूपं मिनोति एकोयूपः एकयूपः तं मित्वा तत्रैकादशिनानालभेत । तेन दोषद्वयाभावः, एकयूपस्याभावादेकादशिन्यभावाच्च ॥

[2]वि वा एष इत्यादि ॥ इन्द्रियेण वीर्येण व्यृद्ध्यते कः चिन्वन् हेतौ शता । चयनेन हेतुना योऽग्निमारोहति । ऐन्द्रचर्चेति । 'इन्द्रं विश्वा अवीवृधन्'* इत्यनया । 'उदात्तयणः'

*सं. ४-६-१.

ऋचाऽऽक्रम॑णं प्रती॒ष्टका॑मु॒प॑ द॒ध्या-
न्नेन्द्रि॒येण॑ वी॒र्ये॑ण॒ व्यृ॑ध्यते रु॒द्रो वा
ए॒ष यद॒ग्निस्तस्य॑ ति॒स्रश्श॒र॒व्याः॑
प्रतीची॑ ति॒रश्च्य॑नू॒ची ताभ्यो॒ वा ए॒-

ऐन्द्रि॒या ॥ २१ ॥ ऋचा । आक्रम॑णमित्या-क्रम॑-
णम् । प्रतीति॑ । इ॒ष्टका॑म् । उ॒पेति॑ । द॒ध्यात् । न ।
इ॒न्द्रि॒येण॑ । वी॒र्ये॑ण । वीति॑ । ऋ॒ध्य॒ते । रु॒द्रः । वै ।
ए॒षः । यत् । अ॒ग्निः । तस्य॑ । ति॒स्रः । श॒र॒व्याः॑ ।
प्र॒ती॒ची॑ । ति॒रश्ची॑ । अ॒नू॒ची॑ । ताभ्य॑ः । वै । ए॒षः ।

इति तृतीयैषा उदात्तत्वम् । क्रमणं प्रतीति आक्रम्यते येन मार्गेण तं प्रति तेन लक्षितां पश्चादुत्तरतो वा इष्टकामुपदध्यात्; नेन्द्रियादिना व्यृद्ध्यते ॥

रुद्रो वा इत्यादि ॥ रुद्रस्य तिस्रः शरव्याः शरस्थानीया हेतयः सन्ति लक्ष्ये मोक्तव्याः । तत्र काचित्प्रतीची प्रतिमुखमागत्य देवाय सन्निधत्ते । काचित्तिरश्ची तिर्यगागत्यात्मानं दर्शयति । काचिदनूची पृष्ठतः कृतानुगमना देवमनुसेवते । ताभ्य इति । ताभ्यश्शरव्याभ्यः एष आवृश्च्यते छिद्यते तासां रक्ष्यो न भवति कः योऽग्निं चिनुते । हेतुरयमावृश्चनस्य चयननिरोधमसहमाना एवमभिभवेयुरिति । तस्मादग्निं चित्वा तिसृधन्वं तिसृभिरिषुभिर्युक्तं धनुरयाचितमेव लक्षणाय विशिष्टाय दद्यात् । 'वा संज्ञायाम्' इति धनुषो नङादेशः, 'अनसन्तान्नपुंसकात्'

पं आ वृश्चयते योऽग्निं चिनुतेऽग्निं
चित्वा तिसृधन्वमयाचितं ब्राह्मणा-
यं दद्यात्ताभ्यं एव नमस्करोत्यथो
ताभ्यं एवात्मानं निष्क्रीणीते यत्ते
रुद्र पुरः ॥ ३० ॥ धनुस्तद्वातो अनु

एति । वृश्चयते । यः । अग्निम् । चिनुते । अग्निम् । चित्वा । तिसृधन्वमिति तिसृ-धन्वम् । अयाचितम् । ब्राह्मणाय । दद्यात् । ताभ्यः । एव । नमः । करोति । अथो इति । ताभ्यः । एव । आत्मानम् । निरिति । क्रीणीते । [4]यत् । ते । रुद्र । पुरः ॥ ३० ॥ धनुः । तत् । वातः । अन्विति । वातु । ते । त-

इत्यच् समासान्तः । तेन प्रसादनहेतुः नमस्कार एव ताभ्यः कृतो भवति । एवं शत्रुभ्यो अभिभावितृभ्यो निष्क्रीणीते रक्ष-णीय एव तासां भवति ॥

[4]उत्तरे श्रोण्यन्ते तिष्ठन् राश्चितमग्निमुपतिष्ठते, अनुपरिक्रामं वा—यत्ते रुद्र इत्यादि ॥ हे रुद्र! अग्नयात्मन् यत्ते पुरः पूर्वस्यां दिशि धनुः तत्तदीयं धनुः वातोऽनुवातु अनुकूलं वर्तमानोऽन्यत्र नयतु यथाऽस्मान्न बाधते । तद्वात इत्युपमानपदं तद्धनुर्वातवत् शीघ्रगतिः तमेवानुवातु अनुगच्छतु माऽत्र स्थितिः अस्मान् बाधिष्ठेति । कर्मणस्संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । हे रुद्र! तस्मै ते धनुषे तुभ्यमेव

वातु ते तस्मै ते रुद्र संवथ्सरेण
नमस्करोमि यत्ते रुद्र दक्षिणा धनु-
स्तद्वातो अनु वातु ते तस्मै ते रुद्र
परिवथ्सरेण नमस्करोमि यत्ते रुद्र
पश्चाद्धनुस्तद्वातो अनु वातु ते त-
स्मै ते रुद्रेदावथ्सरेण नमस्करोमि
यत्ते रुद्रोत्तराद्धनुस्तत् ॥ ३१ ॥ वा-
तो अनु वातु ते तस्मै ते रुद्रेदुव-

स्मै । ते । रुद्र । संवत्सरेणेति सं—वत्सरेण । नमः । करोमि । यत् । ते । रुद्र । दक्षिणा । धनुः । तत् । वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । परिवत्सरेणेति परि—वत्सरेण । नमः । करोमि । यत् । ते । रुद्र । पश्चात् । धनुः । तत् । वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । इदावत्सरेण । नमः । करोमि । यत् । ते । रुद्र । उत्तरादित्युत्—तरात् । धनुः । तत् ॥ ३१ ॥ वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । इदुवत्सरेणेतीदु—वत्सरेण । नमः ।

वा अपनीतधनुषे संवत्सरेण नमस्करोमि आसंवत्सरभाविनं तन्नमस्कारं करोमि । एवमितरेऽपि व्याख्येयाः । प्रथमादिपञ्चमान्तानां समानां संवत्सरादयः आख्याः ॥

त्सरेण नमस्करोमि यत्ते रुद्रोपरि धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र वथ्सरेण नमस्करोमि रुद्रो वा एष यदग्निस्स यथा व्याघ्रः क्रुद्ध- स्तिष्ठत्येवं वा एष एतर्हि संचित- मेतैरुपं तिष्ठते नमस्कारैरेवैनꣳ श-१

करोमि । यत् । ते । रुद्र । उपरि । धनुः । तत् । वातः । अन्विति । वातु । ते । तस्मै । ते । रुद्र । वत्सरेण । नमः । करोमि । रुद्रः । वै । एषः । यत् । अग्निः । सः । यथा । व्याघ्रः । क्रुद्धः । ति- ष्ठति । एवम् । वै । एषः । एतर्हि । संचितमिति सं-चितम् । एतैः । उपेति । तिष्ठते । नमस्कारै- रिति नमः-कारैः । एव । एनम् । शमयति ।

"रुद्रो वा एष यदित्यादि ॥ एषां मन्त्राणां ब्राह्मणं मन्त्रगतरु- द्रपदव्याख्यानायाग्नेः रुद्रत्वेन स्तुतिः । यथा व्याघ्रः केनचित्का- रणात् क्रुद्धः प्रसादनीयास्तिष्ठति सोऽयमग्निरपि एवं क्रुद्ध इव नमस्कारादिभिः प्रसादनीयः एतर्हि अस्मिन्काले भवति । 'इद- मोर्हित्' 'एतेतौ रथोः' इति एतादेशः । तस्मात्संचितं स- मासचितिकमग्निमेतैः 'यत्ते रुद्र' इत्यादिभिरुपतिष्ठते । नमस्कारै- रेनं शमयत्येव ॥

मयति येऽग्नयः ॥ ३२ ॥ पुरीष्याः प्रविष्टाः पृथिवीमनु । तेषां त्वमस्युत्तमः प्रणो जीवातवे सुव । आपं त्वाऽग्ने मनसाऽऽपं त्वाऽग्ने तपसाऽऽपं त्वाऽग्ने दीक्षयाऽऽपं त्वाऽग्न उपसद्भिरापं त्वाऽग्ने सुत्ययाऽऽपं त्वाऽग्ने दक्षिणाभिरापं त्वाऽग्नेऽवभृथेनापं त्वा-

[6] ये । अग्नयः ॥ ३२ ॥ पुरीष्याः । प्रविष्टा इति प्र-विष्टाः । पृथिवीम् । अनु । तेषाम् । त्वम् । असि । उत्तम इत्युत्-तमः । प्र । इति । नः । जीवातवे । सुव । आपम् । त्वा । अग्ने । मनसा । आपम् । त्वा । अग्ने । तपसा । आपम् । त्वा । अग्ने । दीक्षया । आपम् । त्वा । अग्ने । उपसद्भिरित्युपसत्-भिः । आपम् । त्वा । अग्ने । सुत्यया ।

---

[6] येऽग्नयः. पुरीष्या इत्यादिभिः प्रयास्यन्नग्निमुपतिष्ठते यजमानः । येऽग्नय इत्यनुष्टुप् ॥ अन्यानि यजूंषि । पुरीष्याः पुरीषार्हाः पुरीषवन्तः पृथिवीमनुप्रविष्टाः तेषां मध्ये उत्तमस्त्वमसि । उत्तमशब्द उञ्छादिरन्तोदात्तः । तस्मादस्मान् जीवातवे जीवनाय प्रसुव प्रेरय अनुजानीहि वा । त्वामहमापं आप्तवानस्मि मनसा श्रद्धया तपसा एकस्तनव्रतादिना दीक्षया मौञ्ज्यादिलक्षणया उप-

ऽग्ने वृशयाऽऽपं त्वाऽग्ने स्वगाकारे-
णेत्याहैषा वा अग्नेराप्तिस्तयैवैन-
माप्नोति ॥ ३३ ॥

आपम् । त्वा । अग्ने । दक्षिणाभिः । आपम् । त्वा । अग्ने । अवभृथेनेत्यव–भृथेन । आपम् । त्वा । अग्ने । वशया । आपम् । त्वा । अग्ने । [7]स्वगाकारेणेति–स्वगा–कारेण । इति । आह । एषा । वै । अग्नेः । आप्तिः । तया । एव । एनम् । आप्नोति ॥ ३३ ॥

ऐन्द्रिया पुर उत्तराद्धनुस्तदग्रयं आहाष्टौ च ॥ ७॥

---

सदादियागतः वशया अनुबन्ध्यायागेन स्वगाकारेण यज्ञस्य यथास्वभागकल्पनया । किं बहुना एवं सर्वात्मनाऽपि त्वामेवाहं प्राप्तं त्वमपि मय्येव भवितुमर्हसीति ॥

[7]इत्याहेत्याप्तीनां ब्राह्मणम् ॥ एते मन्त्राः आप्तिसंज्ञाः अग्नेराप्तिहेतवः । आप्त्यपेक्षं स्त्रीत्वमेकत्वं च । अनयोपतिष्ठते इति सामर्थ्यात् गम्यते । तयाऽग्निं आप्नोतीत्येवोपस्थाता ॥

इति पञ्चमे पञ्चमे सप्तमः.

गायत्रेण पुरस्तादुप तिष्ठते प्राण-
मेवास्मिन्दधाति बृहद्रथन्तराभ्यां प-
क्षावोज एवास्मिन्दधात्यृतुस्था यं-
ज्ञायज्ञियेन पुच्छमृतुष्वेव प्रति ति-
ष्ठति पृष्ठैरुप तिष्ठते तेजो वै पृष्ठा-

[1]गायत्रेण । पुरस्तात् । उप । इति । तिष्ठते । प्राणमिति प्र-अनम् । एव । अस्मिन्न् । दधाति । बृहद्रथन्तराभ्यामिति बृहत्-रथन्तराभ्याम् । पक्षौ । ओजः । एव । अस्मिन्न् । दधाति । ऋतुस्थायंज्ञायज्ञियेन । पुच्छम् । ऋतुषु । एव । प्रतीति । तिष्ठति । [2]पृष्ठैः । उप । इति । तिष्ठते । तेजः । वै । पृष्ठानि । तेजः । एव । अस्मिन्न् । दधाति ।

[1]गायत्रेणेत्यादि ॥ गायत्रेण साम्ना पुरस्तात् पूर्वस्यां दिशि शिर उपतिष्ठते । बृहद्रथन्तराभ्यां पक्षौ उत्तरदक्षिणौ । ऋतुस्था यज्ञायज्ञीयं नाम साम यज्ञायज्ञीयमिति छन्दोगाः । 'वसन्तम्'* इत्यादियोनिकम् । वनस्पत्यादित्वात् पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । बह्वव्युत्पत्तिकत्वादनवग्रहः ॥

[2]पृष्ठैरिति ॥ सर्वैः पृष्ठसामभिः ॥

*सं. १-६-२.

नि तेज एवास्मिन्दधाति प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः पराङैत्तं वारवन्तीयेनावारयत तद्वारवन्तीयस्य वारवन्तीयत्वꣳ श्यैतेन श्येती अकुरुत तच्छ्यैतस्य श्यैतत्वम् ॥ ३४ ॥ यद्वारवन्तीयेनोपतिष्ठते वा-

[3]प्रजापतिरिति प्रजा-पतिः । अग्निम् । असृजत । सः । अस्मात् । सृष्टः । पराङ् । ऐत् । तम् । वारवन्तीयेनेति वार-वन्तीयेन । अवारयत । तत् । वारवन्तीयस्येति वार-वन्तीयस्य । वारवन्तीयत्वमिति वारवन्तीय-त्वम् । श्यैतेन । श्येती । अकुरुत । तत् । श्यैतस्य । श्यैतत्वमिति श्यैत-त्वम् ॥ ३४ ॥ [4]यत् । वारवन्तीयेनेति वार-वन्ती-

[3]प्रजापतिरित्यादि ॥ पराङ् अपुनरावृत्त एवागच्छत् । तं वारवन्तीयेन साम्ना अवारयत् न्यवर्तयत् परागमनात् । तस्माद्वारणहेतुत्वाद्वारवन्तीयम्, 'अश्वं नत्वा वारवन्तं'* इति लिङ्गात् । श्यैतेन साम्ना 'अभिप्रवस्सुराधसं'† इत्येतद्योनिना । अग्निं श्येती अकुरुत आत्मगामिनमकरोत्, वशीकृतवानिति यावत् । श्यायतेर्गतिकर्मणः श्येतः अभूततद्भावे च्विः । ईषा अक्षादित्वाद्गुणादेशाभावः । तस्मात् श्यानहेतुत्वात् श्यैतम् ॥

[4]यदित्यादि ॥ कर्तुः फलम् । प्रजापतेर्हृदयेन साम्ना इमाः

*ऋ. सं. १-२७-१. †ऋक्सं. ८-४९-१.

रयत एवैनं इयैतेन इयेती कुरुते. प्रजापतेर्हृदयेनापिपक्षं प्रत्युप ति- ष्ठते प्रेमाणमेवास्य गच्छति प्रा- च्यां त्वा दिशा सादयामि गायत्रे- ण छन्दसाऽग्निना देवतयाऽग्नेश्शी- र्ष्णाऽग्नेश्शिर उप दधामि दक्षिणया त्वा दिशा सादयामि त्रैष्टुभेन छन्द-

येन । उपतिष्ठत इत्युप–तिष्ठते । वारयते । एव । एनम् । इयैतेन । इयेती । कुरुते । प्रजापतेर्हृदयेन । अपिपक्षमित्यपि–पक्षम् । प्रति । उपेति । तिष्ठते । प्रेमाणम् । एव । अस्य । गच्छति । [5]प्राच्यां । त्वा । दिशा । सादयामि । गायत्रेण । छन्दसा । अग्निना । देवतया । अग्नेः । शीर्ष्णा । अग्नेः । शिरः । उपेति । दधामि । दक्षिणया । त्वा । दिशा । सादयामि । त्रैष्टुभेन । छन्दसा ।

प्रजाः 'प्रजापतेर्हृदयं' इत्येतत्प्रभवेन अपिपक्षं अभिहतपक्षं दक्षिणपूर्वं च कोणं उत्तरपूर्वं च प्रत्येकमुपतिष्ठते । प्रजापतेः हृदयमिव प्रजापतेः हृदयं समाख्यैषा । छान्दसः षष्ठ्या अलुक् । पूर्ववत् पूर्वोत्तरपदयो- र्गुणपत्प्रकृतिस्वरत्वम् । पूर्ववदनवग्रहः । प्रियत्वमग्रेगच्छति ॥

[5]आत्मेष्टकाः—प्राच्या त्वेत्याद्याः ॥ आत्मापेक्षं पुल्लिङ्गमेकवचनं च ॥

सेन्द्रेण देवतयाऽग्नेः पक्षेणाग्नेः पक्ष-
मुपं दधामि प्रतीच्यां त्वा दिशा
सादयामि ॥ ३५ ॥ जागतेन छन्द-
सा सवित्रा देवतयाऽग्नेः पुच्छेनाग्नेः
पुच्छमुपं दधाम्युदीच्या त्वा दिशा
सादयाम्यानुष्टुभेन छन्दसा मित्रा-
वरुणाभ्यां देवतयाऽग्नेः पक्षेणाग्नेः
पक्षमुपं दधाम्यूर्ध्वया त्वा दिशा सा-
दयामि पाङ्क्तेन छन्दसा बृहस्पतिना

इन्द्रेण । देवतया । अग्नेः । पक्षेण । अग्नेः । पक्षम् । उपेति । दधामि । प्रतीच्याम् । त्वा । दिशा । सादयामि ॥ ३५ ॥ जागतेन । छन्दसा । सवित्रा । देवतया । अग्नेः । पुच्छेन । अग्नेः । पुच्छम् । उपेति । दधामि । उदीच्या । त्वा । दिशा । सादयामि । आनुष्टुभेनेत्यानु-स्तुभेन । छन्दसा । मित्रावरुणाभ्यामिति मित्रा-वरुणाभ्याम् । देवतया । अग्नेः । पक्षेण । अग्नेः । पक्षम् । उपेति । दधामि । ऊर्ध्वया । त्वा । दिशा । सादयामि । पाङ्क्तेन । छन्दसा । बृहस्पतिना । देवतया । अ-

देवतयाऽग्नेः पृष्ठेनाग्नेः पृष्ठमुप दधा-
मि यो वा अपात्मानमग्निं चिनुते-
ऽपात्माऽमुष्मिंल्लोके भवति यस्सा-
त्मानं चिनुते सात्माऽमुष्मिंल्लोके
भवत्यात्मेष्टका उप दधात्येष वा
अग्नेरात्मा सात्मानमेवाग्निं चिनुते
सात्माऽमुष्मिंल्लोके भवति य एवं
वेद ॥ ३६ ॥

ग्नेः । पृष्ठेन । अग्नेः । पृष्ठम् । उपेति । दधामि ।
[6]यः । वै । अपात्मानमित्यप—आत्मानम् । अ-
ग्निम् । चिनुते । अपात्मेत्यप—आत्मा । अमुष्मि-
न्न् । लोके । भवति । यः । सात्मानमिति स—
आत्मानम् । चिनुते । सात्मेति स—आत्मा । अ-
मुष्मिन्न् । लोके । भवति । आत्मेष्टका इत्यात्म—
इष्टकाः । उपेति । दधाति । एषः । वै । अग्नेः । आत्मा ।
सात्मानमिति स—आत्मानम् । एव । अग्निम् ।

---

[6]सात्मानमिति ॥ आसामुपधाता सात्मेति विदुषस्स्तुतिः ॥

इति पञ्चमे पञ्चमे अष्टमोनुवाकः.

अग्ने उदधे या त इषुर्युवा नाम त-
या नो मृड तस्यास्ते नमस्तस्या-
स्त उप जीवन्तो भूयास्माग्ने दुध्र ग-

चिनुते । सात्मेति स-आत्मा । अमुष्मिन्न् । लो-
के । भवति । यः । एवम् । वेद ॥ ३६ ॥

इयैतत्वं प्रतीच्यां त्वा दिशा सादयामि य-
स्सात्मानं चिनुते द्वाविंशतिश्च ॥ ८ ॥

[1]अग्ने । उदध इत्युद-धे । या । ते । इषुः । यु-
वा । नाम । तया । नः । मृड । तस्याः । ते । न-
मः । तस्याः । ते । उपेति । जीवन्तः । भूयास्म ।

[1]पञ्चस्वपि चितिषु सञ्चिताहुतिमन्त्राः*—अग्न उदध इत्या-
द्याः ॥ हे अग्ने उदधे समुद्रवदपरिच्छेद्या या ते तव संबन्धिनी
इषुः इच्छा युवा नाम हविषा देवैर्मिश्रियतीति प्रसिद्धा तयाऽस्मान् मृडय
सुखय । तस्यास्सम्बन्धिने महानुभावाय तुभ्यं नमः । तस्यास्सम्बे-
न्धिनं त्वामुपजीवन्तो वयं भूयास्म भूतिमन्तस्स्यामेति । कर्मणि व्य-
त्ययेन षष्ठी । एवं दुध्रादिष्वपि योज्यम् । तत्र सर्वेष्वपि 'अग्ने'
इत्यादावनुषङ्गः, 'या त इषुः' इत्यादेरन्ते । 'नामन्त्रिते समानाधि-
करणे' इति सामान्यवचनस्य 'अग्ने' इत्यामन्त्रितस्य विद्यमानत्व-
निषेधात् दुध्रादीनि विशेषवचनानि त्रिन्यस्यन्ते । दुध्रो दुर्धरः ।

*पञ्चमस्या विचितिषु सञ्चितामाहुतिमन्त्रा'.

ह्य किंशिल वन्य या त इषुर्युवा नाम तया नो मृड तस्यास्ते नम-स्तस्यास्त उप जीवन्तो भूयास्म प-ञ्च वा एतेऽग्नयो यच्चितय उदधिरेव नाम प्रथमो दुध्रः ॥३७॥ द्वितीयो ग-ह्यस्तृतीयः किंशिलश्चतुर्थो वन्यः पञ्चमस्तेभ्यो यदाहुती र्न जुहुयादध्व-

अग्ने । दुध्र । गह्य । किंशिल । वन्य । या । ते । इषुः । युवा । नाम । तया । नः । मृड । तस्याः । ते । नमः । तस्याः । ते । उपेति । जीवन्तः । भूयास्म । [2]पञ्च । वै । एते । अग्नयः । यत् । चि-तयः । उदधिरित्युद-धिः । एव । नाम । प्रथमः । दुध्रः ॥ ३७ ॥ द्वितीयः । गह्यः । तृतीयः । किंशिलः । चतुर्थः । वन्यः । पञ्चमः । [3]तेभ्यः । यत् ।

---

खलि गुणाभावः, पृषोदरादिः । गह्यः सर्वैर्गृहीतव्यः । गाहतेर्यक्प्रत्ययः छान्दसः, ह्रस्वत्वं च । किंशीलः दुर्निरूपशीलः । पृषोदरादिः । वन्यः । सर्वैर्भजनीयः । छान्दसो यत् ॥

[2]पञ्च वा इत्यादि ॥ अत्रैव ब्राह्मणम् अग्न उदध्यादिनामानः प-ञ्चाग्नयः ॥

[3]तेभ्य इत्यादि ॥ गतम् । आहुतयः सञ्चिताहुतयः 'अग्न उदधे' इत्याद्याः ॥

यं च यजमानं च प्र दहेयुर्यदेता आहु-
ती जुहोति भागधेयेनैवैनाञ्छमयति
नार्तिमार्छत्यध्वर्युर्न यजमानो वा-
ङ्म आसन्नसोः प्राणोऽक्ष्योश्चक्षुः क-
र्णयोश्श्रोत्रं बाह्वोर्बलमूरुवोरोजो-

आहुतीरित्या-हुतीः । न । जुहुयात् । अध्वर्युम् । च । यजमानम् । च । प्रेति । दहेयुः । यत् । एताः । आहुतीरित्या-हुतीः । जुहोति । भागधेयेनेति भाग-धेयेन । एव । एनान् । शमयति । न । आर्तिम् । एति । ऋच्छति । अध्वर्युः । न । यजमानः । [4]वाक् । मे । आसन् । नसोः । प्राण इति प्र-अनः । अक्ष्योः । चक्षुः । कर्णयोः । श्रोत्रम् । बाहुवोः । बलम् । ऊरुवोः । ओजः । अरिष्टा ।

[4]अथ चितेराद्रवणमन्त्रः—वाङ्म आसन्नित्यादि ॥ मम आसन् आस्यै वागिन्द्रियमविकलं तिष्ठतु आधाराधेययोरवियोगं प्रार्थयते। एवं सर्वत्र । 'पद्दन्' इत्यादिना आसन्भावः। नसोः नासिकयोः । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । अक्ष्योरिति । 'ईचाद्विवचने' इतीकारस्योदात्तत्वात् 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । बाहुवोरूरुवोरिति । 'तन्वादीनां छन्दसि बहुलम्' इत्युवङ् । पूर्ववद्विभक्त्युदात्तत्वम् । ओजो वेगः । किं बहुना—विश्वानि उत्क्रव्यति-

ऽरिष्टा विश्वान्यङ्गानि तनूः ॥३८॥
तनुवा मे सह नमस्ते अस्तु मा मा
हिꣳसीरप वा एतस्मात्प्राणाः क्रा-
मन्ति योऽग्निं चिन्वन्नधि क्रामति वा-
ङ्मं आसन्नसोः प्राण इत्याह प्राणा-
नेवात्मन्धत्ते यो रुद्रो अग्नौ यो अ-

विश्वानि । अङ्गानि । तनूः ॥ ३८ ॥ तनुवा । मे । सह । नमः । ते । अस्तु । मा । मा । हिꣳसीः । [5]अपेति । वै । एतस्मात् । प्राणा इति प्र-अनाः । क्रामन्ति । यः । अग्निम् । चिन्वन् । अधिक्रामतीत्यधि-क्रामति । वाक् । मे । आसन् । नसोः । प्राण इति प्र-अनः । इति । आह । प्राणानिति प्र-अनान् । एव । आत्मन् । धत्ते । [6]यः । रुद्रः । अग्नौ । यः । अप्स्वित्यप्-सु । यः । ओषधीषु ।

---

रिक्तान्यपि-ममाङ्गानि अरिष्टानि अहिंसितानि अक्षीणशक्तीनि सन्तु । तनूश्च मे तनुवा तन्ववयवैः हस्तपादादिभिः सहैव सर्वदा भवतु । पूर्ववदुवङ् । नमस्ते अस्तु मा मा हिंसीः यथोक्तमेव संपादय ॥

[5]अप वा एतस्मादित्यादि ॥ अत्रैव ब्राह्मणम् । अनेन मन्त्रेणाभिवणात् आत्मति पुनः प्राणान् धत्ते ॥

[6]गावीधुकं चरुं चरमायामिष्टकायां निदधाति यस्यां शतरुद्रीयं

प्सु य ओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्त्वाहुतिभागा वा अन्ये रुद्रा हविर्भागाः ॥ ३१ ॥ अन्ये शंतरुद्रीयꣳ हुत्वा गावीधुकं चरुमेतेन यजुषा चरमायामिष्टकायां नि दध्याद्भागधेयेनैवैनꣳ शमयति तस्य त्वै शत-

यः । रुद्रः । विश्वा । भुवना । आविवेशेत्या-विवेश । तस्मै । रुद्राय । नमः । अस्तु ।[7] आहुतिभागा इत्याहुति-भागाः । वै । अन्ये । रुद्राः । हविर्भागा इति हविः-भागाः ॥ ३१ ॥ अन्ये । शंतरुद्रीयमिति शत-रुद्रीयम् । हुत्वा । गावीधुकम् । चरुम् । एतेन । यजुषा । चरमायाम् । इष्टकायाम् । नीति । दध्यात् । भागधेयेनेति भाग-धेयेन । एव । एनम् । शमयति । तस्य । तु । वै ।

जुहोति—यो रुद्र इत्यनुष्टुभा ॥ यो देवोऽग्न्यादिष्ववस्थितः ततश्च विश्वान्यपि भूतजातानि विवेश तस्मै नम इति ॥

[7]आहुतिभागा इत्यादि ॥ अत्रैव ब्राह्मणम् । आहुतिभागानां शतरुद्रीयहविर्भागाः । शतरुद्रीयानन्तरं गावीधुकं चरुनिधानं अं-

रुद्रीयꣳ हुतमित्याहुर्यस्यैतदग्नौ क्रि-
यत इति वसवस्त्वा रुद्रैः पुरस्ता-
त्पान्तु पितरस्त्वा यमराजानः पि-
तृभिर्दक्षिणतः पान्त्वादित्यास्त्वा वि-
श्वैर्देवैः पश्चात्पान्तु द्युतानस्त्वा मा-
रुतो मरुद्भिरुत्तरतः पातु ॥ ४० ॥
देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽध-

शतरुद्रीयमिति शत–रुद्रीयम् । हुतम् । इति । आहुः । यस्य । एतत् । अग्नौ । क्रियते । इति । [8]वसवः । त्वा । रुद्रैः । पुरस्तात् । पान्तु । पितरः । त्वा । यमराजान इति यम–राजानः । पितृभिरिति पितृ–भिः । दक्षिणतः । पान्तु । आदित्याः । त्वा । विश्वैः । देवैः । पश्चात् । पान्तु । द्युतानः । त्वा । मारुतः । मरुद्भिरिति मरुत्–भिः । उत्तरत इत्यु-त्–तरतः । पातु ॥ ४० ॥ देवाः । त्वा । इन्द्रज्येष्ठा इतीन्द्र–ज्येष्ठाः । वरुणराजान इति वरुण–राजानः । अधस्तात् । च । उपरिष्टात् । च । पा-

शाराधनेनांशमेव शमयति । तस्य त्वा इति । तस्यैव शतरुद्रीयं हुतं भवति तस्यैतच्चरुनिधानं क्रियत इत्याहुः यज्ञविदः ॥

[8]सञ्चितमग्निं आज्येन प्रोक्षति—वसवस्त्वेत्यादिभिः ॥ त्वामेवमेतैस्सह पान्त्विति ॥

स्तांच्चोपरिष्टाच्च पान्तु न वा एतेन पूतो न मेध्यो न प्रोक्षितो यदेनमतः प्राचीनं प्रोक्षति यत्संचितमाज्येन प्रोक्षति तेन पूतस्तेन मेध्यस्तेन प्रोक्षितः ॥ ४१ ॥

न्तु । [9]न । वै । एतेन । पूतः । न । मेध्यः । न । प्रोक्षित इति प्र-उक्षितः । यत् । एनम् । अतः । प्राचीनम् । प्रोक्षतीति प्र-उक्षति । यत् । सञ्चितमिति सं-चितम् । आज्येन । प्रोक्षतीति प्र-उक्षति । तेन । पूतः । तेन । मेध्यः । तेन । प्रोक्षित इति प्र-उक्षितः ॥ ४१ ॥

दुध्रस्तनूर् हविर्भागाः पातु द्वात्रिंशच्च ॥ ९ ॥

[9]न वा एतेनेत्यादि ॥ अत्रैव ब्राह्मणं—नायमग्निरेतेन प्रोक्षणेन पूतो नैव पूतः नैव मेध्यः मेधार्हः । किं बहुना प्रोक्षित एव न भवति । द्वितीयस्तुत्यर्थं प्रथमस्य निन्दा । केनेत्याह—अतः अस्माच्चरुनिधानात् प्राचीनं पूर्वं यदेनं प्रोक्षति 'सहस्रस्य प्रमा असि'* इति हिरण्यशल्कैः तदकृतसममेवैतद्दृष्टचा भवति । तस्माद्यत्सञ्चितमिदानीं चरुनिधानानन्तरं आज्येन प्रोक्षति वसवस्त्वादिभिः एतैर्मन्त्रैः । तेनैव पूतत्वादिभाव इति चरुनिधानस्यैव स्तुतिः; आज्यप्रोक्षणस्यैव वा ॥

इति पञ्चमे पञ्चमे नवमोनुवाकः.

*सं. ४-४-११.

समीची नामासि प्राची दिक्तस्या-
स्तेऽग्निरधिपतिरसितो रक्षिता यश्चा-
धिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ
नो मृडयतां ते यं द्विष्मो यश्च नो
द्वेष्टि तं वां जम्भे दधाम्योजस्विनी
नामासि दक्षिणा दिक्तस्यास्त इ-

[1]समीची । नाम । असि । प्राची । दिक् । त-
स्याः । ते । अग्निः । अधिपतिरित्यधि-पतिः । अ-
सितः । रक्षिता । यः । च । अधिपतिरित्यधि-
पतिः । यः । च । गोप्ता । ताभ्याम् । नमः । तौ ।
नः । मृडयताम् । ते । यम् । द्विष्मः । यः । च ।
नः । द्वेष्टि । तम् । वाम् । जम्भे । दधामि । ओ-
जस्विनी । नाम । असि । दक्षिणा । दिक् । त-
स्याः । ते । इन्द्रः । अधिपतिरित्यधि-पतिः । पृ-

[1]सर्पाहुतीः जुहोति—समीची नामासीत्याद्याः ॥ अनुपरिक्रामम् । समीची नाम त्वमसि सम्यग्गमना प्राची दिक् । तस्यास्तेऽग्निरधिपतिः असितो नाम कृष्णः सर्पो रक्षिता । तस्यास्तव योऽधिपतिः अग्निः यश्च गोप्ता ताभ्यां अधिपतिरक्षितृभ्यां नमः । तौ नः अस्माकं मृडयतां सुखयताम् । ते वयं यं द्विष्मः यश्च नः अस्मान् द्वेष्टि तं वां जम्भे युवयोरास्ये दधामि भक्षयितुम् । ओजस्विनी नाम त्वमसि

न्द्रोऽधिपतिः पृदाकुः प्राची नामासि प्रतीची दिक्तस्यास्ते ॥ ४२ ॥ सोमोऽधिपतिस्स्वजोऽवस्थावा नामास्युदीची दिक्तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजिरधिपत्नी नामासि नृहती दिक्तस्यास्ते बृहस्पतिरधिप-

दाकुः । प्राची । नाम । असि । प्रतीची । दिक् । तस्याः । ते ॥ ४२ ॥ सोमः । अधिपतिरित्यधि–पतिः । स्वज इति स्व–जः । अवस्थावेत्यव–स्थावा । नाम । असि । उदीची । दिक् । तस्याः । ते । वरुणः । अधिपतिरित्यधि–पतिः । तिरश्चराजिरिति तिरश्च–राजिः । अधिपत्नीत्यधि–पत्नी । नाम । असि । बृहती । दिक् । तस्याः । ते । बृहस्पतिः । अधिपतिरित्यधि–पतिः । श्वित्रः । वशि-

दक्षिणा दिक् । तस्यास्ते तव इन्द्रोधिपतिः । पृदाकुर्नाम सर्पोऽजगरः । रक्षितेत्यादिकं सर्वत्रानुषज्यते । प्राची नामासि त्वम् । प्रकृष्टगमना प्रतीची दिक् । तस्यास्ते सोमोधिपतिः स्वजो नाम सर्पो रक्षिता। स्वस्मिन् जायत इति स्वजः स्वायत्तबलः । स्वजनशील इत्येके । अवस्थावा नामासि त्वं अवस्थापयित्री उदीची दिक् । 'आतो मनिन्' इति वनिप्, व्यत्ययेन ङीप्रेफयोरभावः, मत्वर्थीयो

तेश्श्वित्रो वशिनी नामासीयं दि-
क्तस्यास्ते यमोऽधिपतिः कल्माष-
ग्रीवो रक्षिता यश्चाधिपतिर्यश्च गो-
प्ता ताभ्यां नमस्तौ नो मृडयतां ते
यं द्विष्मो यश्च ॥ ४३ ॥ नो द्वेष्टि तं
वां जम्भे दधाम्येता वै देवता अ-

नी । नाम । असि । इयं । दिक् । तस्याः । ते । यमः । अधिपतिरित्यधि-पतिः । कल्माषग्रीव इति कल्माष-ग्रीवः । रक्षिता । यः । च । अधिपतिरित्यधि-पतिः । यः । च । गोप्ता । ताभ्याम् । नमः । तौ । नः । मृडयताम् । ते । यम् । द्विष्मः । यः । च ॥ ४३ ॥ नः । द्वेष्टि । तम् । वाम् । जम्भे । दधामि । [2]एताः । वै । देवताः । अग्निम् ।

---

वा वकारः । तस्यास्ते वरुणोधिपतिः तिरश्चराजिर्नाम सर्पो रक्षिता तिरश्चीनाः राजयोऽस्य सन्तीति । अधिपत्नी नामासि त्वं बृहती ऊर्ध्वा दिक् । तस्यास्ते बृहस्पतिरधिपतिः श्वित्रो नाम सर्पो रक्षिता श्वयनशीलः श्वित्रः । वशिनी नाम त्वमसि वशवर्तीति । इयं अधरां दिक् । तस्यास्ते यमोधिपतिः कल्माषग्रीवो नाम सर्पो रक्षिता ॥

[2]एता वा इत्यादि ॥ अत्रैव ब्राह्मणम् । आहुतीः एतास्सर्पाहुतीः हुत्वा एनान् शमयति ॥

ग्निं चितꣳ रंक्षन्ति ताभ्यो यदाहुती-
र्न जुंहुयादंध्वर्युं च यजंमानं च ध्या-
येयुर्यदेता आहुंतीर्जुहोति भागधेये-
नैवैनाञ्छमयति नार्तिमार्छत्यध्वर्युर्न
यजंमानो हेतयो नाम स्थ तेषां
वः पुरो गृहा अग्निर्व इषंवस्सालिलो

च्चितम् । रक्षन्ति । ताभ्यः । यत् । आहुंतीरित्या–
हुतीः । न । जुहुयात् । अध्वर्युम् । च । यजंमा-
। च । ध्यायेयुः । यत् । एताः । आहुंतीरि-
त्या–हुतीः । जुहोति । भागधेयेनेति भाग–धेयेन ।
एव । एनान् । शमयति । न । आर्तिम् । एति ।
ऋच्छति । अध्वर्युः । न । यजंमानः । [3] हेतयः ।
नामं । स्थ । तेषाम् । वः । पुरः । गृहाः । अग्निः ।

[3] अथ गन्धर्वाहुतीः जुहोति—हेतयो नाम स्थेत्याद्याः ॥ यथा हुतः तथा गन्धर्वा हेतयो हन्तारो नाम शत्रूणाम् । तेषां वः युष्माकं पुरः पूर्वस्यां दिशि गृहाः । 'पूर्वाधर' इत्यसिप्रत्ययः । अग्नितुल्या युष्माकमिषवः ताद्धर्म्यात्ताच्छब्द्यम् । सलिल इति वातनामं वातस्य नाम । येऽस्याग्नेः प्रेरयितारः । 'अनसन्तान्नपुंसकात्' इत्यच् समासान्तः । वातनाममित्यादि सर्वत्रानुषज्यते । अन्यतरतोनुषङ्गाम्नाना एते । उभयतोनुषङ्गाम्नानां

निलिम्पा नाम ॥ ४४ ॥ स्थ तेषां
वो दक्षिणा गृहाः पितरो व इषव-
स्सगरो वज्रिणो नाम स्थ तेषां वः
पश्चाद्गृहास्स्वप्नो व इषवो गह्वरोऽ-

वः । इषवः । सलिलः । [4]निलिम्पा इति नि-लिम्पाः । नाम ॥ ४४ ॥ स्थ । तेषाम् । वः । दक्षिणा । गृहाः । पितरः । वः । इषवः । सगरः । [5]वज्रिणः । नाम । स्थ । तेषाम् । वः । पश्चात् । गृहाः । स्वप्नः । वः । इषवः । [6]गह्वरः । अवस्थावान् इत्यव-स्थावान् । नाम । स्थ । तेषाम् । वः । उत्तरादित्युत्-त-

सर्पाह्वयः । तेभ्यो वो नम इत्यादि व्याख्यातमेव ॥

[4]निलिम्पा नाम गन्धर्वास्स्थ नितरां लिप्ताः । तेषां वो दक्षिणस्यां दिशि गृहाः । दक्षिणादाच् । पितरः पातारो युष्माकमिषवः ; सगर इति वातस्य नाम ॥

[5]वज्रिणो नाम गन्धर्वास्स्थ ॥ तेषां पश्चादपरस्यां दिशि गृहाः । 'पश्चपश्चाच्' इति निपात्यते । स्वप्नः स्वापनकारिणः शत्रूणां व इषवः ॥

[6]गह्वर इति वातस्य नाम । अवस्थावानो नाम गन्धर्वास्स्थ अवस्थापयितारः । पूर्ववद्गनिप् । तेषामुत्तरादुत्तरस्यां दिशि गृहाः । 'उत्तराधरदक्षिणादातिः' । आपः व्यापनशीलाः इषवः ॥

वस्थावानो नाम स्थ तेषां व उत्त-
राद्गृहा आपो व इषवस्समुद्रोऽधि-
पतयो नाम स्थ तेषां व उपरि गृ-
हा वर्षं व इषवोऽवस्वान्क्रव्या ना-
म स्थ पार्थिवास्तेषां व इह गृहाः
॥४५॥ अन्नं व इषवो निमिषो वा-
तनाम तेभ्यो वो नमस्ते नो मृड-

रात् । गृहाः । आपः । वः । इषवः । [7]समुद्रः । अ-
धिपतय इत्यधि-पतयः । नाम । स्थ । तेषाम् । वः ।
उपरि । गृहाः । वर्षम् । वः । इषवः । अवस्वान् ।
[8]क्रव्याः । नाम । स्थ । पार्थिवाः । तेषाम् । वः । इ-
ह । गृहाः ॥ ४५ ॥ अन्नम् । वः । इषवः । निमिष
इति नि-मिषः । वातनाममिति वात-नामम् । ते-
भ्यः । वः । नमः । ते । नः । मृडयत । ते । यम् ।

[7]समुद्र इति वातनाम । अधिपतयो नाम गन्धर्वास्स्थ । तेषां व उपरि ऊर्ध्वायां दिशि गृहाः । 'उपर्युपरिष्टात्' इति निपात्यते। वर्षं वृष्यमाणा वा वृष्टिहेतवो वा इषवः । अवस्वानिति वातस्य नाम ॥

[8]गन्धर्वाः [क्रव्या नाम गन्धर्वाः] पार्थिवास्स्थ तेषां वः इह पृथिव्यां गृहाः । 'इदमो हः' । अन्नं अन्नहेतवो युष्माकमिषवः । निमिष इति वातस्य नाम ॥

यत् ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि हुतादो वा अन्ये देवा अहुतादोऽन्ये तानग्निचिदेवो-भयान्प्रीणाति दध्ना मधुमिश्रेणैता आहुतीर्जुहोति भागधेयेनैवैनान्प्रीणात्यथो खल्वाहुरिष्टका वै देवा अहुताद इति ॥४६॥ अनुपरिक्रामं जु-

द्विष्मः । यः । च । नः । द्वेष्टि । तम् । वः । जम्भे । दधामि । [1]हुताद इति हुत—अदः । वै । अन्ये । देवाः । अहुताद इत्यहुत—अदः । अन्ये । तान् । अग्निचिदित्यग्नि—चित् । एव । उभयान् । प्रीणाति । दध्ना । मधुमिश्रेणेति मधु—मिश्रेण । एताः । आहुतीरित्या—हुतीः । जुहोति । भागधेयेनेति भाग—धेयेन । एव । एनान् । प्रीणाति । अथो इति । खलु । आहुः । इष्टकाः । वै । देवाः । अहुताद इत्यहुत—अदः । इति ॥ ४६ ॥ अनुपरिक्रामम्मित्यनु—परि-

[1]हुतादो वा इत्यादि ॥ अत्र ब्राह्मणम् । एता गन्धर्वाहुतीः । अथो अपि च खल्वाहुः इष्टका अहुतादो देवा इति । अनुपरिक्रामं अनुपरिक्रम्यानुपरिक्रम्य अपरिवर्गं न किञ्चिदपि अपरिवृज्य ॥

ह्रोत्यपरिवर्गमेवैनान्प्रीणातीमꣳ स्तनमूर्जस्वन्तं धयापां प्रप्यातमग्ने सरिरस्य मध्ये । उथ्सं जुषस्व मधुमन्तमूर्व समुद्रियꣳ सदनमा विशस्व । यो वा अग्निं प्रयुज्य न

क्रामम् । जुहोति । अपरिवर्गमित्यपरि—वर्गम् । एव । एनान् । प्रीणाति । [10]इमम् । स्तनम् । ऊर्जस्वन्तम् । धय । अपाम् । प्रप्यातमिति प्र—प्यातम् । अग्ने । सरिरस्य । मध्ये । उत्सम् । जुषस्व । मधुमन्तमिति मधु—मन्तम् । ऊर्व । समुद्रियम् । सदनम् । एति । विशस्व । [11]यः । वै । अग्निम् । प्र-

[10]आज्यस्य पूर्णां स्रुचमग्नेर्विमोकं जुहोति—इमं स्तनमिति त्रिष्टुभा ॥ इमं स्तनं उत्पादकत्वेन मातृस्थानीयानामासां स्तनस्थानीयं स्रुक्स्थमाज्यं ऊर्जस्वन्तं रसवन्तं धय पिब । प्रप्यातं प्रवृद्धं हे अग्ने सारिरस्य सलिलस्य मध्ये यथा सलिलस्थ, मध्ये उत्सं प्रप्यायते न क्षीयते उत्सं उत्सस्थानीयं उत्स्यन्दनं जुषस्व सेवस्व मधुमन्तं मधुररसवन्तं ऊर्व वर्धयस्व च । ऊर्व पूरणे । यद्वा—हे ऊर्व महन् ते समुद्रियं समुद्रे भवं सदनं स्थानं आविशस्व आत्मीयमेव स्थानं अस्माभिर्विमुक्तो भजस्वेति । ‘ समुद्राभ्राद्धः ’ ॥

[11]यो वा अग्निमिति ॥ अत्रैव ब्राह्मणम् । कर्मसमाप्तावप्यवि-

वि मुञ्चति यथाऽश्वो युक्तोऽविमुच्यमानः क्षुध्यन्पराभवत्येवमस्याग्निः परा भवति तं पराभवन्तं यजमानोऽनु परा भवति सोऽग्निं चित्वा लूक्षः ॥ ४७ ॥ भवतीमꣳ स्तनमूर्जस्वन्तं धयापामित्याज्यस्य पूर्णाꣳ

युज्येति प्र–युज्य । न । विमुञ्चतीति वि–मुञ्चति । यथा । अश्वः । युक्तः । अविमुच्यमान इत्यवि–मुच्यमानः । क्षुध्यन्न् । पराभवतीति परा–भवति । एवम् । अस्य । अग्निः । परेति । भवति । तम् । पराभवन्तमिति परा–भवन्तम् । यजमानः । अनु । परेति । भवति । सः । अग्निम् । चित्वा । लूक्षः ॥४७॥ भवति । इमम् । स्तनम् । ऊर्जस्वन्तम् । धय । अपाम् । इति । आज्यस्य । पूर्णाम् । स्रुचम् । जुहोति । एषः । वै । अग्नेः । विमोक इति

मुक्तश्चेत् इत्यादौ यत्तोश्व इवास्याग्निः पराभवति नश्यति भागाभावात् । ततश्च यजमानोपि नश्येत् । स चित्वाऽग्निं लूक्षो दुर्गतो भवति । तस्मादेष होमोग्नेः विमोकाय भवति । विमुक्ताय वाऽन्नमपि दत्तं भवति । तस्मादित्यादि । यश्चैवमिमं वृत्तान्तं वेद यश्च न वेद लौकिकः । हितमेव सर्वेऽप्याहुः । कथं—सुहितः सुतृप्तो वाजी अश्वश्च सुधायं आभीक्ष्ण्येण शोभनं ददातीति । अ-

मुञ्चं जुहोत्येष वा अ॒ग्नेर्वि॑मो॒को वि॒मुच्यै॒वास्मा॒ अन्न॒मपि॑ दधाति॒ तस्मा॑दाहु॒र्यश्चै॒वं वेद॒ यश्च॒ न सुधाय॑ꣳ ह वै वा॒जी सुहि॑तो दधा॒तीत्य॒ग्निर्वाव वा॒जी तमे॒व तत्प्री॑णाति॒ स ए॑नं प्री॒तः प्री॑णाति॒ वसी॑यान्भवति ॥ ४९ ॥

वि-मो॒कः । वि॒मुच्येति॑ वि-मुच्य॑ । ए॒व । अ॒स्मै॒ । अन्न॑म् । अपीति॑ । द॒धा॒ति॒ । तस्मा॑त् । आ॒हुः॒ । यः । च॒ । ए॒वम् । वेद॑ । यः । च॒ । न । सु॒धाय॒मिति॑ सु-धाय॑म् । ह॒ । वै । वा॒जी । सुहि॑त॒ इति॑ सु-हि॒तः । द॒धा॒ति॒ । इति॑ । अ॒ग्निः । वाव । वा॒जी । तम् । ए॒व । तत् । प्री॒णा॒ति॒ । सः । ए॒न॒म् । प्री॒तः । प्री॒णा॒ति॒ । वसी॑यान् । भ॒व॒ति॒ ॥ ४९ ॥

प्र॒तीची॒ दिक्तस्या॑स्ते द्वि॒ष्मो यश्च॒ नि॒लि॒म्पा॒ नामे॒ह गृ॒हा इति॑ लु॒क्षो वसी॑यान्भवति ॥ १० ॥

ग्निश्चायमश्वस्थानीयः । तमेव तेन भागेन प्रीणाति । स चैनं प्रीतः प्रीणाति । ततो वसीयान् वसुमत्तरो भवति यजमानः । 'वि-न्मतो लुक्' ॥

इति पञ्चमे पञ्चमे दशमोऽनुवाकः.

इन्द्राय राज्ञे सूकरो वरुणाय राज्ञे कृष्णो यमाय राज्ञ ऋश्य ऋषभाय राज्ञे गवयश्शार्दूलाय राज्ञे गौरः पुरुषराजाय मर्कटः क्षिप्रश्येनस्य वर्तिका नीलङ्गोः क्रिमिस्सोमस्य रा-

[1]इन्द्राय । राज्ञे । सूकरः । वरुणाय । राज्ञे । कृष्णः । यमाय । राज्ञे । ऋश्यः । ऋषभाय । राज्ञे । गवयः । शार्दूलाय । राज्ञे । गौरः । पुरुषराजायेति पुरुष—राजाय । मर्कटः । क्षिप्रश्येनस्येति क्षिप्र—श्येनस्य । वर्तिका । नीलङ्गोः । क्रि-

[1]अथाश्वमेधिकाः पशवो विधीयन्ते । वैश्वदेवं काण्डम् । 'इन्द्राय राज्ञे सूकरः' इत्यारभ्य एकाशीत्यः एकादशानुवाकाम्नाना आरण्या वेदितव्याः । आद्या एकादशिनी—दुर्ग्रहांस्तान् सिंहादीन् चित्रपटे लिखित्वा उपाकरणादि कुर्यात् इत्येके । ग्राम्याणां सौधारण्येऽप्यारण्या एव ग्रहीतव्याः । तत्र चतुर्थ्या पञ्चम्यन्तेन च देवतासम्बन्धः प्रतिपाद्यते । इन्द्राय देवानां राज्ञे सूकरो वराह आलभ्यते । वरुणाय अपां राज्ञे कृष्णः कृष्णमृगः । यमाय धर्माणां राज्ञे ऋश्यः मृगविशेषः । गुणविहीनत्वात् [विहीनो वा] । ऋषभाय गवां राज्ञे गवयः गोसदृशः सास्नारहितः । शार्दूलाय आरण्यानां राज्ञे गौरः गौरमृगः । रक्त इत्येके । शुक्ल इत्यन्ये । पुरुषाणां राज्ञे प्रधानाय म-

ज्ञः कुलुङ्गस्सिन्धोश्शिꣳशुमारो हि-
मवतो हस्ती ॥ ४१ ॥

मयुः प्राजापत्य ऊलो हलीक्ष्णो वृ-
षदꣳशस्ते धातुस्सरस्वत्यै शारि-

र्भिः । सोमस्य । राज्ञः । कुलुङ्गः । सिन्धोः । शिꣳ-
ꣳशुमारः । हिमवत इति हिम-वतः । हस्ती ॥ ४१

इन्द्रायाष्टाविꣳशतिः ॥ ११ ॥

मयुः । प्राजापत्य इति प्राजा-पत्यः । ऊलः ।
हलीक्ष्णः । वृषदꣳशः । ते । धातुः । सरस्वत्यै ।
शारिः । श्येता । पुरुषवागिति पुरुष-वाक् । सर-

---

र्कटः वानरः । क्षिप्रश्येनस्य क्षिप्रगतेश्शकुनराजस्य श्येनविशेषस्य वर्तिका याअक[चटका]सदृशी । नीलङ्गोः नीलप्रभस्य सर्पविशेषस्य सरीसृपाणां राज्ञे क्रिमिः गोमयपिण्डकरी । सोमस्य राज्ञः ओषधीनां कुलुङ्गः चित्ता*कटुकस्वनः । सिन्धोः शिशुमारः ग्राहः । हिमवतो हस्ती गजः ॥

इति पञ्चमे पञ्चमे एकादशोनुवाकः.

---

[1]मयुः किंपुरुष इत्येके । आरण्यमयूर इत्यन्ये । स प्राजापत्यः । ऊलादयस्त्रयो धातुः । ऊलः कुररः । कङ्क इत्य-

---

*चित्का.

श्श्येता पुंरुषवाक्सरंस्वते शुकंश्श्ये-
तः पुंरुषवागांरण्योंजो नंकुलश्शका
ते पौष्णा वाचे क्रौञ्चः ॥५०॥

अपां नप्त्रें जपो नाक्रो मकंरः कु-
लीकयंस्तेऽकूंपारस्य वाचे पैङ्गराजो

श्येते । शुकः । श्येतः । पुरुषवागिति पुरुष–वाक् । आरण्यः । अजः । नकुलः । शका । ते । पौष्णाः । वाचे । क्रौञ्चः ॥ ५० ॥

मयुस्त्रयोविंशतिः ॥ १२ ॥

अपाम् । नप्त्रे । जषः । नाक्रः । मकंरः । कुलीकयः । ते । अकूपारस्य । वाचे । पैङ्गराज इति

न्ये । दीर्घकर्ण इत्यपरे । यच्छब्दश्रवणान्मत्स्या उत्तिष्ठन्ति । हलीक्ष्णः तृणसिंह इत्यन्ये । हरितचटक इत्येके । वृषदंशो मार्जारः तत्सदृश इत्येके । दीर्घकर्णो मृगसदृश इत्यन्ये । शार्यादयस्सरस्वते । शुकादयस्सप्त पौष्णाः । वाचे सरस्वत्याः क्रौञ्चः खञ्जरीटः दारुणरवः ॥

इति पञ्चमे पञ्चमे द्वादशोनुवाकः.

अपां नप्त्रे चतुर्थाय ओर्वायाग्नये जषः अवटुण्डो [जषवत्तुण्डो] मकरः । झषो भाषायाम् । झष हिंसायाम् । पचाद्यच् । नक्रा-

भगाय कुषीतक आती वाहसो दर्विदा ते वायव्या दिग्भ्यश्चक्रवाकः॥५१

बलायाजगर आखुस्सृजया शयण्डकस्ते मैत्रा मृत्यवेऽसितो मन्यु-

पैङ्ग—राजः । भगाय । कुषीतकः । आती । वाहसः । दर्विदा । ते । वायव्याः । दिग्भ्य इति दिक्—भ्यः । चक्रवाकः ॥ ५१ ॥

अपामेकान्न विंशतिः ॥ १३ ॥

[1]बलाय । अजगरः । आखुः । सृजया । शयण्डकः । ते । मैत्राः । मृत्यवे । असितः । मन्यवे ।

दयः त्रयः अकूपारस्य समुद्रस्य । नक्रः दीर्घतुण्डो ग्राहः । दीर्घपुच्छो मत्स्य इत्येके । मकरः पर्यस्ततुण्डः । कुलीकयः बहुपान्मत्स्यविशेषः नाकावर्तो नाम । वाचे पैङ्गराजः भारद्वाजः रक्ताकारः । समुद्रतरङ्गचारी महापक्षीत्यन्ये । चकोर इत्यपरे । भगाय कुषीतकः समुद्रकाकः । आत्यादयस्त्रयो वायव्याः । पूर्ववत् पुंसः शेषः ।—आती आतिः चाषः इत्येके । वाहसः भात्रहकः नक्तनायकः (?) घूमालिल इत्यन्ये । दर्विदा दर्वा श्येनात्मा जलपक्षी । द्रुमकुक्कुट इत्यन्ये । दिग्भ्यः चक्रवाकः दिवाविरही ॥

इति पञ्चमे पञ्चमे त्रयोदशोऽनुवाकः.

[1]बलायाजगरः प्रसिद्धः । आख्वादयस्त्रयो मैत्राः । आखुः प्रसिद्धः । सृजया नीलमक्षिका, शुक्लसर्प इत्येके । नीलमहिष इत्यपरे । शयण्डकः

वै स्वजः कुम्भीनसः पुष्करसादो लोहिताहिस्ते त्वाष्ट्राः प्रतिश्रुत्कायै वाहसः ॥ ५२ ॥
पुरुषमृगश्चन्द्रमसे गोधा कालका

स्वज इति स्व–जः । कुम्भीनस इति कुम्भी–नसः । पुष्करसाद इति पुष्कर–सादः । लोहिताहिरिति लोहित–अहिः । ते । त्वाष्ट्राः । प्रतिश्रुत्काया इति प्रति–श्रुत्कायै । वाहसः ॥ ५२ ॥

चत्वारिंशद्दश ॥ १४ ॥

[1]पुरुषमृग इति पुरुष–मृगः । चन्द्रमसे । गोधा । कालका । दार्वाघाट इति दारु–आघातः । ते ।

कृकलासः । मृत्यवे अमितः कृष्णसर्पः । मन्यवे स्वजः सर्पविशेषः । स्वयं जायते पलालादिषु । कुम्भीनसादयः त्रयस्त्वाष्ट्राः । कुम्भीनसः कोणः स्वापशीलः । पुष्करसादः पुष्करसर्प इत्यन्ये । भ्रमर इत्येके । लोहिताहिः श्वेतलोहितसर्पः । प्रतिश्रुत्कायै प्रतिश्रुत्ये वाहसः अल्पगात्रसर्पः ॥

इति पञ्चमे पञ्चमे चतुर्दशोनुवाकः.

---

[1]पुरुषमृगः पुरुषमुखो मृगः चन्द्रमसे । गोधादयः त्रयो वनस्पतीनाम् । गोधा मुसलिका । महागोधा इत्येके । कालका लाटा* । स्वा-

*सरटा इति माधवीये.

दार्वाघाटस्ते वनस्पतीनामेण्यह्ने कृ-
ष्णो रात्रियै पिकः क्ष्विङ्का नील-
शीर्ष्णी तेऽर्यम्णे धातुः कत्कटः॥५३

सौरी बलाकर्श्यो मयूरश्श्येनस्ते गं-
न्धर्वाणां वसूनां कपिञ्जलो रुद्राणां

वनस्पतीनाम् । एणी । अह्ने । कृष्णः । रात्रियै । पिकः । क्ष्विङ्का । नीलशीर्ष्णीति नील-शीर्ष्णी । ते । अर्यम्णे । धातुः । कत्कटः ॥ ५३ ॥

पुरुषमृगोऽष्टादश ॥ १५ ॥

[1]सौरी । बलाका । ऋश्यः । मयूरः । श्येनः । ते । गन्धर्वाणाम् । वसूनाम् । कपिञ्जलः । रुद्राणाम् ।

द्रुफलखण्डिनी । दार्वाघाटः द्रुमकुक्कुटः । एणी मृगः अह्ने । कृष्णो मृगः रात्र्यै । पिकादयः त्रयः अर्यम्णे । पिकः कोकिलः । क्ष्विङ्का रक्तमुखी वानरी । नीलशीर्ष्णी कृष्णमुखी वानरी । 'अन उपधालोपिनः' इति ङीप् । धातुः कत्कटः बिलवासी ॥

इति पञ्चमे पञ्चमे पञ्चदशोनुवाकः.

---

[1]सौरी बलाका प्रावृट्प्रिया । ऋश्यादयस्त्रयो गन्धर्वाणाम् । गन्धर्वा देवताः प्रसिद्धाः । वसूनां कपिञ्जलः तित्तिरिजातीयः अधो निपात्यः* रुद्राणां तित्तिरिः पुरुषस्वरः । रोहिताद्याः तिस्रः

*काट्कविळनरि इति द्रामिडभाषया प्रतिपदं क्वचित्कोशे दृश्यते.

तित्तिरी रोहित्कुण्डृणाची गोलत्तिका
ता अप्सरसामरण्याय सृमरः॥५४
पृषतो वैश्वदेवः पित्वो न्यङ्कुः क-
शस्तेऽनुमत्या अन्यवापोऽर्धमासा-
नां मासां कश्यपः क्वयिः कुटरुर्दा-

तित्तिरिः । रोहित् । कुण्डृणाची । गोलत्तिका । ताः । अप्सरसाम् । अरण्याय । सृमरः ॥ ५४ ॥

सौर्येष्टादश ॥ १६ ॥

[1]पृषतः । वैश्वदेव इति वैश्व–देवः । पित्वः । न्यङ्कुः । कशः । ते । अनुमत्या इत्यनु–मत्यै । अन्यवाप इत्यन्य–वापः । अर्धमासानामित्यर्ध–मासा-

अप्सरसाम् । रोहित् ऋश्यस्त्री कुण्डृणाची ग्रहगोळिका* । गोळत्तिका खञ्जरीटका । पीतशुक्लेति केचित्[1] । अरण्याय सृमरः चमरः ॥

इति पञ्चमे पञ्चमे षोडशोनुवाकः.

[1]पृषतः श्वेतः श्वेतबिन्दुशबलाङ्गो मृगः । पित्वादयस्त्रयोऽनुमत्यै । न्यङ्कुः हरिणः । ऋक्ष इत्येके । कशः सूतवशा नकुलजातिः लोमवपुरश्वा । अन्यवापः पुष्ट[क्षुद्र]विशेषः । मासां कश्यपः कच्छपः । क्वय्यादयस्त्रयस्सिनीवाल्यै । क्वयिः जलकुक्कुटः । हि-

*नच्चुप्पली. [1]मंजटी.

त्यौहस्ते सिनीवाल्यै बृहस्पतये शि-
त्पुटः ॥ ५५ ॥
शका भौमी पान्त्रः कशो मान्थी-
लवस्ते पितृणामृतूनां जहका संव-

नाम् । मासाम् । कश्यपः । क्वयिः । कुटरुः । दा-
त्यौहः । ते । सिनीवाल्यै । बृहस्पतये । शित्पुटः ॥
पृषतोऽष्टादश ॥ १७ ॥

[1]शका । भौमी । पान्त्रः । कशः । मान्थीलवः । ते । पितृणाम् । ऋतूनाम् । जहका । संवत्सरायेति सं—वत्सराय । लोपा । कपोतः । उलूकः ।

रण्याशीत्येके । कुटरुः मृगसिंहः । उलूकविशेष इत्यन्ये । दात्यूहः जलकुक्कुट इत्येके । पुष्करिणीवसतिरित्यन्ये । बृहस्पतये शित्पुटः मार्जारसदृशो जातिविशेषः । वीतपूर इत्येके ॥

इति पञ्चमे पञ्चमे सप्तदशोनुवाकः.

---

[1]शका उक्ता* पान्त्रादयस्त्रयः पितृणाम् । शकुनिनिघातः कशः गतः† । मान्थीलवः महाउदभुक्‡ । शकुनिकुट्टक इत्येके । ऋतूनां जहका बिलवासी§ । क्रोष्टा शललिजातीयः । क्षुद्रविशेष इत्येके । संवत्सराय लोपा मृगविशेषः । लोमाविकेत्ये-

*सं. ५-५-१२. †सं. ५-५-१७. ‡पेरुवघ्वाल्. §नोळ्ननरो.

श्वशुराय लोपा कपोत उलूकश्शश-
स्ते नैर्ऋताः कृकवाकुस्सावित्रः ॥
रुरू रौद्रः कृकलासश्शकुनिः पिप्प-
का ते शरव्यायै हरिणो मारुतो ब्र-
ह्मणे शार्गस्तरक्षुः कृष्णश्श्वा चतुर-

शशः । ते । नैर्ऋता इति नैः–ऋताः । कृकवाकुः । सावित्रः ॥ ५६ ॥

शकाऽष्टादश ॥ १८ ॥

रुरुः । रौद्रः । कृकलासः । शकुनिः । पिप्पका । ते । शरव्यायै । हरिणः । मारुतः । ब्रह्मणे । शार्गः । तरक्षुः । कृष्णः । श्वा । चतुरक्ष इति चतुः–

---

के । श्मशानशकुनिरित्यन्ये । कपोतादयस्त्रयो नैर्ऋताः । कपोतो रक्तपादः । उलूको दिवाभीतः । शशः मृगविशेषः । उद्धृत्य कुट्टिका कृकवाकुः अरण्यकुक्कुटः ॥

इति पञ्चमे पञ्चमे अष्टादशोनुवाकः.

---

रुरुः मृगविशेषः । कृकलासादयः त्रयश्शरव्यायै । कृकलासः कामरूपी* । शकुनिः काकः । पिप्पका कुलाली शकुन्तिका । हरिणो मारुतः गतः । ब्रह्मणे शार्गः आरण्यचटकः । तरक्ष्वादयः

*पञ्चोरलि.

क्षो गर्दभस्त इंतरजनानांमग्नये धूं-
क्ष्णा ॥ ५७ ॥
अलज आंन्तरिक्ष उद्रो मद्गुः प्लव-
स्तेऽपाम्दित्यै हꣳससाचिरिन्द्राण्यै
कीरूशा गृध्रंश्शितिकक्षी वा्ध्री-

अक्षः । गर्दभः । ते । इतरजनानामितीतर-जना-
नाम् । अग्नये । धूंक्ष्णा ॥ ५७ ॥

रुरुर्विꣳशतिः ॥ १९ ॥

[1]अलजः । आन्तरिक्षः । उद्रः । मद्गुः । प्लवः ।
ते । अपाम् । अदित्यै । हꣳससाचिरिति हꣳस-
साचिः । इन्द्राण्यै । कीरूशा । गृध्रः । शितिकक्षी-
ति शिति-कक्षी । वार्ध्राणसः । ते । दिव्याः । द्या-

त्रयः इतरजनानाम् । तरक्षुः व्याघ्रविशेषो गर्दभाकारः कृष्णवर्णः । चतुरक्षः श्वा अक्ष्णोरुपरि बिन्दुद्वयवान् । गर्दभः प्रसिद्धः । अग्नये धूंक्ष्णा श्वेतकाकी ॥

इति पञ्चमे पञ्चमे एकोनविंशोनुवाकः.

---

[1]अलजः भासः ॥ उद्रादयस्त्रयोपाम् । उद्रो जलबिडालः । मद्गुः जलकाकः । प्लवः शकटबिलः । अदित्यै हंससाचिः सर्वश्वेतो हंसः । इन्द्राण्यै कीरूशा कुलाली शकुन्तिका । गृध्रादयस्त्रयो दिव्याः । गृध्रः प्रसिद्धः । शितिकक्षी पाण्डुरोदरः गृध्रः ।

णंसस्ते दिव्या द्यावापृथिव्यां श्वा-
वित् ॥ ५८ ॥

सुपर्णः पार्जन्यो हꣳसो वृको वृष-
दꣳशस्त ऐन्द्रा अपामुद्रोऽर्यम्णे
लोपाशस्सिꣳहो नकुलो व्याघ्रस्ते
महेन्द्राय कामाय परस्वान् ॥५९॥

वापृथिव्येति द्यावा—पृथिव्यां । श्वाविदिति श्व—
वित् ॥ ५८ ॥

अलजोऽष्टादश ॥ २० ॥

[1]सुपर्ण इति सु—पर्णः । पार्जन्यः । हꣳसः ।
वृकः । वृषदꣳशः । ते । ऐन्द्राः । अपाम् । उद्रः।
अर्यम्णे । लोपाशः । सिꣳहः । नकुलः । व्याघ्रः।
ते । महेन्द्रायेति महा—इन्द्राय । कामाय । पर-
स्वान् ॥ ५९ ॥

सुपर्णोऽष्टादश ॥ २१ ॥

वाघ्राण* कङ्कणचारीक इत्येके । खड्गमृग इत्येके । द्यावा-
पृथिव्या श्वावित् । शल्ली सूचीरोमा ॥

इति पञ्चमे पञ्चमे विंशोनुवाकः.

[1] सुपर्णः प्रसिद्धः हंसादयस्त्रय ऐन्द्राः । हंसो गतः । वृकः
लोहितश्वा । वृषदंशः मार्जारसदृशः । अपामुद्र उक्तः† । अर्यम्णे

*अणराल्. †सं.५-५-२०.

आग्नेयः कृष्णग्रीवस्सारस्वती मेषी
बभ्रुस्सौम्यः पौष्णश्श्यामश्शिति-
पृष्ठो बार्.हस्पत्यश्शिल्पो वैश्वदेव
ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्रा-
ग्नस्सꣳहितोऽधोरामस्सावित्रो वारु
णः पेत्वः ॥ ६० ॥

[1]आग्नेयः । कृष्णग्रीव इति कृष्ण-ग्रीवः । सारस्वती । मेषी । बभ्रुः । सौम्यः । पौष्णः । श्यामः । शितिपृष्ठ इति शिति-पृष्ठः । बार्.हस्पत्यः । शिल्पः । वैश्वदेव इति वैश्व-देवः । ऐन्द्रः । अरुणः । मारुतः । कल्माषः । ऐन्द्राग्न इत्यैन्द्र-

लोपाशः क्रोष्टा । सिंहादयस्त्रयो महेन्द्राय गताः । कामाय परस्वान्महिषः । गर्दभ इत्येके ॥

इति पञ्चमे पञ्चमे एकविंशोनुवाकः.

अतः परं ग्राम्या एकादशिन्यः—आग्नेयः कृष्णग्रीवः । गतः* । सारस्वती मेषी । गता* । मेषवर्णेत्येके । बभ्रुः पाण्डरकपिलः । सौम्यः पौष्णः । श्यामः रक्तकृष्णः । शितिपृष्ठः श्वेतपृष्ठः । 'शितेर्नित्याबह्वज्बहुव्रीहौ' इत्युत्तरपदान्तोदात्तत्वम् । शिल्पः बहुरूपः । ऐन्द्रो वारुणः सन्ध्यावर्णः । मारुतः कल्माषः कृष्णबिन्दुचितः .

*सं. २-१-२.

अश्वस्तूपरो गोमृगस्ते प्राजापत्या आग्नेयौ कृष्णग्रीवौ त्वाष्ट्रौ लोमशसक्थौ शितिपृष्ठौ बार्हस्पत्यौ धा-

अग्नः। सꣳहित इति सं-हितः । अधोराम इत्यधः-रामः। सावित्रः । वारुणः । पेत्वः ॥ ६० ॥

आग्नेयो द्वाविꣳशतिः ॥ २२ ॥

[1]अश्वः । तूपरः । गोमृग इति गो-मृगः । ते । प्राजापत्या इति प्राजा-पत्याः । आग्नेयौ । कृष्णग्रीवाविति कृष्ण-ग्रीवौ । त्वाष्ट्रौ । लोमशसक्थाविति लोमश-सक्थौ । शितिपृष्ठाविति शि-

ऐन्द्राग्नः । संहितः शुक्लकृष्णशबलः अधोरामः श्वेतकृष्णोदरः वारुणः पेत्वः गळितमुष्को मेषः ॥

इति पञ्चमे पञ्चमे द्वाविंशोनुवाकः.

---

[1]अश्वादयः त्रयः प्राजापत्याः । अश्वो गतः । तूपरः शृङ्गहीनः । गोमृगः स्वेच्छाचारी लोक*पीडनरुचिः । (अङ्गपौ) । आग्नेयौ कृष्णग्रीवौ । गतौ[†] । त्वाष्ट्रौ लोमशसक्थौ बहुलोमकोरू । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यच् समासान्तः । 'सक्थ्यश्चाक्रान्तात्' इत्युत्तरपदान्तोदात्तत्वम् । शितिपृष्ठौ श्वेतपृष्ठौ । उक्त-

*लोम. †सं. २-१-२.

त्रे पृषोदरस्सौर्यो बलक्षः पेत्वः॥६१
अग्नयेऽनीकवते रोहिताञ्जिरनड्वान-
धोरामौ सावित्रौ पौष्णौ रजतना-
भी वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः
कल्माष आग्नेयः कृष्णोजस्सारस्व-

ति–पृष्ठौ । बार्हस्पत्यौ । धात्रे । पृषोदर इति पृष–उदरः । सौर्यः । बलक्षः । पेत्वः ॥ ६१ ॥

अश्वष्षोडश॥ २३ ॥

अग्नये । अनीकवत इत्यनीक–वते । रोहिताञ्जिरिति रोहित–अञ्जिः । अनड्वान् । अधोरामावित्यधः–रामौ । सावित्रौ । पौष्णौ । रजतनाभी इति रजत–नाभी । वैश्वदेवाविति वैश्व–देवौ । पिशङ्गौ । तूपरौ । मारुतः । कल्माषः । आग्नेयः । कृ-

मुत्तरपदान्तोदात्तत्वम् । धात्रे पृषोदरः श्वेतबिन्दुमद्गुरः । पृषोदरादित्वादभीष्टरूपस्वरसिद्धिः । सौर्यो बलक्षः श्वेतः पेत्व उक्तः* ॥

इति पञ्चमे पञ्चमे त्रयोविंशोनुवाकः.

[1]अग्नयेऽनीकवते रोहिताञ्जिरनड्वान् रोहितलिङ्गः । रक्त इत्येके । अधोरामौ उक्तौ* । पौष्णौ रजतनाभी शुक्लनाभी । वैश्वदेवौ पिशङ्गौ तूपरौ उक्तौ† । मारुतः कल्माषः आग्नेयः कृष्णोजः ।

*सं. ५-५-२२. †सं. ५-५-२३.

ती मेषी वारुणः कृष्ण एकशिति-
पात्पेत्वः ॥ ६२ ॥

ष्णः । अजः । सारस्वती । मेषी । वारुणः । कृष्णः ।
एकशितिपादित्येक–शितिपात् । पेत्वः ॥ ६२ ॥

अग्नयेऽनीकवते द्वाविꣳशतिः ॥ २४ ॥

यदेकेन प्रजापतिः प्रेणाऽनु यजुषाऽऽपो विश्व-
कर्माऽग्न आ याहि सुवर्गाय वज्रो गायत्रेणाग्नं उदधे
समीक्ष्वीन्द्राय मयुरपां बलाय पुरुषमृगस्सौरी पृष-
तङ्शका रुरुरलजस्सुपर्ण आग्नेयोऽश्वोऽग्नयेऽनीक-
वते चतुर्विꣳशतिः ॥ २४ ॥

यदेकेन स पापीयानेतद्वा अग्नेर्धनु-
स्तद्देवास्त्वेन्द्रज्येष्ठा अपां न-
प्त्रेऽश्वस्तूपरो द्विपष्टिः॥६२॥

हरिः ओम्.

गतः । सारस्वती मेषी । गता* । वारुणः कृष्णः एकशितिपात्
श्वेतैकपादः । पेत्व उक्तः† ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
पञ्चमे काण्डे पञ्चमे प्रपाठके चतुर्विंशोनुवाकः.

समाप्तः प्रपाठकः.

हरिः ओम्.

*सं. २-१-२. †सं. ५-५-२२.

## अथ षष्ठप्रपाठकप्रारम्भः

हरिः ओम् ॥ हिरण्यवर्णाश्शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निं या गर्भं दधिरे विरूपास्ता न आपश्शꣳ स्योना भवन्तु । यासाꣳ राजा वरुणो याति

[1]हिरण्यवर्णा इति हिरण्य—वर्णाः । शुचयः । पावकाः । यासु । जातः । कश्यपः । यासु । इन्द्रः । अग्निम् । याः । गर्भम् । दधिरे । विरूपा इति वि—रूपाः । ताः । नः । आपः । शम् । स्यो-

[1]अतः परमग्निकाण्डमेवाग्नचार्पेयम् ॥ तत्र कुम्भेष्टकोपधानमन्त्राः—हिरण्यवर्णा इत्याद्याः ॥ प्रथमा त्रिष्टुप् । हिरण्यवर्णाः हितरमणीयवर्णाः, हिरण्यसदृशवर्णा वा स्वच्छत्वात् । शुचयः शुद्धाः । पावकाः शोधयित्र्यः । 'पावकादीनां छन्दसि' इतीत्वाभावः । यासु जातः कश्यपः प्रजापतिः 'तद्दशहोताऽन्वसृज्यत । प्रजापतिर्वै दशहोता'* इति । यासु चेन्द्रोजातः मध्यमो विद्युदात्मा, याश्चाग्निं गर्भं दधिरे धारयन्ति, यथा 'अग्ने गर्भो अपामसि'† इति । ता आपः विरूपाः नः अस्माकं शान्तिहेतवः स्योनास्सुखहेतवश्च भवन्तु ॥

*ब्रा. २-२-१.   †सं. ४-२-३.

मध्ये सत्यानृते अवपश्यञ्जनानाम्।
मधुश्चुतश्शुचयो याः पावकास्ता न
आपश्शᳪ स्योना भवन्तु । यासां
देवा दिवि कृण्वन्ति भक्षं या अन्त-
रिक्षे बहुधा भवन्ति । याः पृथिवीं

नाः । भवन्तु । [2]यासाम् । राजा । वरुणः । याति । मध्ये । सत्यानृते इति सत्य–अनृते । अवपश्यन्नित्यव–पश्यन् । जनानाम् । मधुश्चुत इति मधु–श्चुतः । शुचयः । याः । पावकाः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु । [3]यासाम् । देवाः । दिवि । कृण्वन्ति । भक्षम् । याः । अन्तरिक्षे । बहुधेति बहु–धा । भवन्ति । याः । पृथिवीम् ।

[2]द्वितीया—यासां राजेति त्रिष्टुप् ॥ यासां मध्ये वरुणो राजा वरणीयो वा आदित्यो याति सत्यानृते जनानामवपश्यन् अवहितः पश्यन् मधुश्चुतः मधुरसस्य क्षारयित्र्यः शुचय इत्यादि । गतम् ॥

[3]यासां देवा इत्यादि ॥ तृतीया त्रिष्टुप । यासामेकदेशममृतं सोमं वा देवा अपि भक्षं कृण्वन्ति । यद्वा—देवा आदित्यरश्मयः दिवि आदित्यमण्डले या भक्षं कुर्वन्ति स्थापयन्ति । कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी, 'धिन्विकृण्व्योरच' इत्युप्रत्ययः । याश्चान्तरिक्षे बहुधा भवन्ति बहुप्रकारा आविर्भवन्ति वर्षासु । याश्च

पर्यसोन्दन्ति ॥१॥ शुक्रास्ता न आ-
पश्शꣳ स्योना भवन्तु । शिवेन मा
चक्षुषा पश्यतापश्शिवया तनुवोप
स्पृशत त्वचं मे । सर्वाꣳ अग्नीꣳरं-
प्सुषदो हुवे वो मयि वर्चो बलमो-

पर्यसा । उन्दन्ति ॥ १ ॥ शुक्राः । ताः । नः । आः-
पः । शम् । स्योनाः । भवन्तु । [4]शिवेन । मा ।
चक्षुषा । पश्यत । आपः । शिवया । तनुवा । उ-
पेति । स्पृशत । त्वचम् । मे । सर्वान् । अग्नीन् ।
अप्सुषद इत्यप्सु—सदः । हुवे । वः । मयि । व-

पृथिवी पयसा स्वनेत्यंशेन [स्वेनैवांशेन] ओदनेन वा हेतुना उन्द-न्ति क्लेदयन्ति शुक्रा निर्मलाः । ता न इत्यादि । गतम् ॥

[4]चतुर्थी—शिवेनेति त्रिष्टुप् ॥ आप इति प्रथमपादान्तः । हे आपः! शिवेन शान्तेन चक्षुषा मां पश्यत । किञ्च—शिवया तनुवा शरीरेण मे त्वचमुपस्पृशत । तथा कृते अहमासादितान्सर्वानग्नीनप्सुषदः ये अप्सु युष्मासु सीदन्ति तान्युष्मत्सम्बन्धिनः युष्मदर्थं वा हुवे आह्वयामि । 'दीर्घादटि समानपादे', इत्युभयत्र रुत्वम्; 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । यूयमपि मयि वर्च अन्नं बलं सामर्थ्यं ओजस्तेजश्च निधत्त नियमेन स्थापयत ॥

जो॒ नि धत्त । यद॒दः सं॑प्रय॒तीरहा॑-
वनंदता॑ ह॒ते । तस्मा॒दा न॒द्यो॑ नाम॑
स्थ॒ ता वो॒ नामा॑नि सिन्धवः । य-
त्प्रेषि॑ता॒ वरु॑णेन॒ ताश्शीभ॑ꣳ स॒मव॑-

र्च॑ । बल॑म् । ओजः॑ । नीति॑ । ध॒त्त । [6]यत् । अ॒-
दः । सं॒प्र॒य॒तीरिति॑ सं-प्र॒य॒तीः । अहौ॑ । अनं॑दत ।
ह॒ते । तस्मा॑त् । एति॑ । न॒द्यः॑ । नाम॑ । स्थ॒ । ता ।
वः॒ । नामा॑नि । सि॒न्ध॒वः॒ । [6]यत् । प्रेषि॑ता॒ इति॑

[5]पञ्चमी—यददः इत्यनुष्टुप् ॥ संप्रयतीरिति प्रथमपादान्तः । अदः इति सप्तम्या अलुक् । अमुष्मिन्नहौ अहन्तव्ये मेघे हते ताडिते यद्यस्माद्यूयं संप्रयतीः संभूयेतश्चेतश्च प्रतिगान्त्यः* अनदत शब्दं कृतवत्यस्स्थ । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । एतेश्शतरि 'इणो यण्' 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्, 'शतुरनुमः' इति नद्या उदात्तत्वम् । तस्मात्कारणादाभिमुख्येनाव्यवधानेनैव नद्यो नाम यूयं स्थ नदनान्नद्य इत्युच्यध्वे । नडिति पचादिषु पाठात्, दिवः 'उदात्तस्वरितयोः' इति विभक्तिस्स्वर्यते । हे सिन्धवः स्यन्दनशीलाः । 'स्यन्देः प्रसारणं धश्च' इत्युप्रत्ययः । ता तादृशानि वः युष्माकं नामानि अन्वर्थानीत्यर्थः ॥

[6]नामान्तराणामपि व्युत्पत्तिं प्रदर्शयिष्याम इति बहुवचनानिर्देशेनोपक्षिप्तं तत्रापि इति नाम व्युत्पादयितुमाह—यदिति ॥

*धावन्त्यः.

ल्गत ॥ २ ॥ तदाप्नोदिन्द्रो वो यती-
स्तस्मादापो अनु स्थन । अपका-
मꣳ स्यन्दमाना अवीवरत वो हि-

प्र–इषिताः । वरुणेन । ताः । शीभम् । समवल्ग-
तेति सं–अवल्गत ॥ २ ॥ तत् । आप्नोत् । इन्द्रः ।
वः । यतीः । तस्मात् । आपः । अन्विति । स्थ-
न । [7]अपकाममित्यप–कामम् । स्यन्दमानाः ।
अवीवरत । वः । हिकम् । इन्द्रः । वः । शक्तिभि-

षष्ठी—इयमप्यनुष्टुप् । यद्यदा वरुणेन राज्ञा प्रेषिता, आदित्येन रश्मिभिर्वा नीताः सत्यस्ता यूयं शीभं शिघ्रं शोभनं समवल्गत सम्भूय नृत्यन्त इव शोभनं चेष्टितवत्यः । तदानीं वः युष्मान् यतीः गच्छतीः विलक्षणगतीः मध्यमस्थाने आप्नोदिन्द्रः ; तस्मात्कारणात् अनु अनन्तरं ततः प्रभृति आपः स्थन अप्शब्दवाच्याः स्थ । आप्नोतेः कर्मणि क्विप्, 'तप्तनप्तनथनाश्च' इति तनपादेशः ॥

[7]सप्तमी—अपकाममित्यनुष्टुप् ॥ अत्र वारिति नाम व्याचष्टे—अपकामं विनैव कामेन स्यन्दमानाः सदा स्यन्दनं कुर्वाणाः वः युष्मान् इन्द्रः अवीवरत वृतवान् युष्मानात्मसात्कर्तुमैच्छत् । वः युष्माकं शक्तिभिः हेतुभिः । हिकमिति पादपूरणे, प्रसिद्धौ वा । वस ईप्सायाम्, चुरादिरदन्तः व्यत्ययेन सन्वद्भावः । वृणोतेर्वा स्वार्थिकोण् छान्दसः । देवीः देवनशीलाः तस्मात्कारणात्

क॑म् । इन्द्रो॑ व॒श्शक्ति॑भिर्दे॑वी॒स्तस्मा॑-
द्वार्णाम॑ वो हि॒तम् । एको॑ दे॒वो अ-
प्य॑तिष्ठ॒थ्स्यन्द॑माना यथाव॒शम् । उ-
दा॑निषु॒र्म॒हीरिति॒ तस्मा॑दु॒द॒कमु॑च्यते ।

रिति॒ शक्ति॑-भिः॒ । दे॒वीः । तस्मा॑त् । वाः । ना-
म॑ । वः॒ । हि॒तम् । [8]एक॑ः । दे॒वः । अपीति॑ । अ॒ति॒-
ष्ठ॒त् । स्यन्द॑मानाः । य॒था॒व॒शमिति॑ यथा-व॒शम् ।
उदिति॑ । आ॒नि॒षुः॒ । म॒हीः । इति॑ । तस्मा॑त् । उ॒द॒-
क॑म् । उ॒च्य॒ते॒ । [9]आप॑ः । भ॒द्राः । घृ॒तम् । इत् ।

वारिति नाम वः युष्माकं हितं निहितं, सर्वस्मै वा हितम् । वर्णव्यत्ययेन णत्वम् ॥

[8]अष्टमी—एक इत्यनुष्टुप् ॥ अत्रोदकं व्युत्पादयति—एको देव इन्द्रः अप्यतिष्ठत् स्वामित्वेनाध्यतिष्ठत् । अध्यर्थे अपिशब्दः । यथावशं यथेष्टं इतश्चेतश्च स्यन्दमाना आपः । यद्वा—स्यन्दमानास्सर्वास्स्रवन्तीरपः यथावशमप्यतिष्ठत् मध्यमे स्थाने आत्मनि आत्मनो वशं नीतवान् । तेन देवबहुमानेन आप उदानिषुः उच्छ्वसितवत्यः महीरिति महत्यो जाता वयमेतेनेति । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । तस्मात्कारणादुदकमित्यपां नाम निरुच्यते उदानादुदकमिति । उत्पूर्वादनितेरौणादिकः कप्रत्ययः, नकारलोपश्च ॥

[9]नवमी—आपो भद्रा इति त्रिष्टुप् ॥ आपो भद्राः भन्दनीयाः

आपो॑ भ॒द्रा घृ॒तमिदाप॑ आसुर॒ग्नी-
षोमौ॒ बिभ्र॒त्याप॒ इत्ताः । ती॒व्रो रसो॑
मधु॒पृचा॑म् ॥ ३ ॥ अ॒र॒ङ्ग॒म आ मा॑
प्रा॒णेन॑ स॒ह वर्च॑सा गन्न् । आदि-

आप॑ः । आ॒सु॒ः । अ॒ग्नीषो॒मा॒वित्य॒ग्नी—सोमौ॑ । बि॒-
भ्रति॒ । आप॑ः । इत् । ताः । ती॒व्रः । रस॑ः । म॒धु॒-
पृ॒चा॒मिति॑ मधु—पृचा॑म् ॥ ३ ॥ अ॒र॒ङ्ग॒म इत्य॑र॑—
ग॒मः । एति॑ । मा॒ । प्रा॒णेनेति॑ प्र—अ॒नेन॑ । स॒ह ।
वर्च॑सा । ग॒न्न् । [10]आत् । इत् । प॒श्या॒मि॒ । उ॒त । दा॒ ।

आप एव घृतमाज्यमासुः भवन्ति तृणादिनिष्पादनेन गवां धारकत्वात् । 'छन्दस्युभयथा' इति सार्वधातुकत्वात् असेर्लेटि न भूभावः । किञ्च—ता एव आपः अग्नीषोमौ बिभ्रति धारयन्ति खुन्नादिहः [अन्नादिना] विद्युन्निष्पत्त्याऽग्निं रश्मिवृद्ध्या सोमम् । 'ईदग्नेः' इतीत्वम्, 'अग्नेस्तुत् स्तोमसोमाः' इति षत्वम्, 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । तादृशीनामपां मधुपृचां मधुस्वादुना रसेन संपृक्तानां तीव्रः उद्भूतो रसः, अरङ्गमः पर्याप्तगमनः कदाचिदप्यक्षीणेन प्राणेन चक्षुरादिना वर्चसा बलेन च सह मा आगन् आगच्छन्तु, तद्धेतुत्वात्प्राणादिस्थितेः । गमेः छान्दसे लुङि च्लेर्लुक् । 'मो नो धातोः' इति नत्वम् ॥

[10]दशमी—आदिति त्रिष्टुप् ॥ प्राणेन सहागन् इत्युक्तम् । तदिदानीं समर्थयते—आदित् अनन्तरमेवाहं पश्यामि । उत अपि

त्पश्याम्युत वा शृणोम्या मा घोषो गच्छाति वाङ्न आसाम् । मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः । आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे

शृणोमि । एति । मा । घोषः । गच्छाति । वाक् । नः । आसाम् । मन्ये । भेजानः । अमृतस्य । तर्हि । हिरण्यवर्णा इति हिरण्य–वर्णाः । अतृपम् । यदा । वः । [11]आपः । हि । स्थ । मयोभुव इति मयः–भुवः । ताः । नः । ऊर्जे । दधातन ।

वा शृणोमि । घोषश्च मामागच्छति । अस्माकं वाग्रूपः आसां युष्माकमागमनेन रमेन वा । किं बहुना—तर्हि तदानीं अमृतस्य भेजान अमृतमेव भजन् अहं मन्ये तर्कयामि । पूर्ववत्कर्मणस्संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । कदा—यदाहि हे हिरण्यवर्णाः! वः युष्माकं अतृपं युष्मत्पानेन सुहितोभवम् । तृप तृंप तृप्तौ, तौदादिकः । सुहितार्थयोगे षष्ठी ॥

[11]आपो हिष्ठादयस्तिस्रः 'त्रि पाजसा'* इत्यत्र व्याख्याताः । आपः व्यापिंतास्स्थ मयोभुवः सुखस्य भावयित्र्यः ताः यूयं नः अस्मान् ऊर्जे रसाय दधातन स्थापयत ऊर्जं वा अस्मभ्यं दत्त महे महते रणाय रमणीयाय चक्षसे ज्ञानाय चेति प्रथमा ॥

*सं. ४-१-५.

रणाय चक्षसे । यो वश्शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः । दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या सं भव ब्र-

महे । रणाय । चक्षसे । [12]यः । वः । शिवतम इति शिव-तमः । रसः । तस्य । भाजयत । इह । नः । उशतीः । इव । मातरः । [13]तस्मै । अरम् । गमाम । वः । यस्य । क्षयाय । जिन्वथ । आपः । जनयथ । च । नः । [14]दिवि । श्रयस्व । अन्तरिक्षे । यतस्व । पृथिव्या । समिति । भव । ब्रह्मव-

[12]यो वः युष्माकं शिवतमो रसः तं अस्मान् भाजयत इह कर्मणि । तस्य वा एकदेशमस्मान् प्रापयत उशतीः कामयमाना मातर इवेति द्वितीया ॥

[13]तस्मै युष्माकं रसाय पर्याप्तं गमाम तं गम्यास्स्म । यस्य रसस्य क्षयाय निवासभूतं पुरुषं जिन्वथ प्रीणयथ । किञ्च—अस्मान् हे आपः! जनयथ जातान्कुरुत युष्मद्रसवन्तो हि जाता भवन्तीति तृतीया ॥

[14]बार्हस्पत्ये उपदधाति—दिवि श्रयस्वेति यजुषा ॥ दिवि द्युलोके श्रयस्व धारकत्वेनास्व । अन्तरिक्षे च यतस्व धारकत्वेन व्याप्नि-

ह्मवर्चसमसि ब्रह्मवर्चसाय त्वा ॥४॥
अपां ग्रहान्गृह्णात्येतद्वाव राजसूयं
यदेते ग्रहास्सवोऽग्निर्वरुणसवो रा-

र्चसमिति ब्रह्म–वर्चसम् । असि । ब्रह्मवर्चसायेति
ब्रह्म–वर्चसाय । त्वा ॥ ४ ॥

उन्दन्ति समवल्गत मधुपृचां मातरो
द्वाविंशतिश्च ॥१॥

[1]अपाम् । ग्रहान् । गृह्णाति । एतत् । वाव ।
राजसूयमिति राज–सूयम् । यत् । एते । ग्रहाः ।
सवः । अग्निः । वरुणसव इति वरुण–सवः । रा-

यस्व । पृथिव्यां च सह सम्भव एकीभव । एवं त्रीनपि लोकान्धारय ब्रह्मवर्चसमेव त्वमसि । तद्धेतुत्वात्ताच्छब्द्यम् । त्वा त्वां ब्रह्मवर्चसाय उपदधामीति शेषः ॥

इति पञ्चमे षष्ठे प्रथमोनुवाकः.

[1]अथासां ब्राह्मणं—अपां ग्रहान् गृह्णातीति विधिः ॥ गृह्यन्त इति ग्रहाः कुम्भाश्च कुम्भ्यश्च कुम्भेष्टका उच्यन्ते । ' ग्रहवृढनिश्चिगमश्च ' इत्यप् । अपां सम्बन्धिन्यः कुम्भस्थाः आपोपां ग्रहाः ग्रहसंस्तवात् गृह्णाति चोदिताः एता उपदधातीति यावत् । वक्ष्यति च ' यस्यैता उपधीयन्ते '* इति । यद्वा—आपो गृह्यन्ते

*सं. ५-६-२.[2]

जसूयमग्निसवश्चित्यस्ताभ्यामेव सू-
यतेऽथो उभावेव लोकावभि जयति
यश्च राजसूयेनेजानस्य यश्चाग्निचि-
त आपो भवन्त्यापो वा अग्नेर्भ्रातृ-

जसूयमिति राज-सूयम् । अग्निसव इत्यग्नि-स-
वः । चित्यः । ताभ्याम् । एव । सूयते । अथो इ-
ति । उभौ । एव । लोकौ । अभीति । जयति ।
यः । च । राजसूयेनेति राज-सूयेन । इजानस्य ।
यः । च । अग्निचित इत्यग्नि-चितः । आपः । भ-

आसु ता अपां ग्रहाः कुम्भेष्टका उच्यन्ते । एतद्वावेति । त-
त्सादृश्यात्ताच्छब्द्यम् । सवोऽग्निरिति । सवो यज्ञविशेषः येनेश्वरो
भवति अग्निचित्या स्वयं स एवाग्निरिति । पूर्ववत्ताच्छब्द्यम् । उक्तं
कुम्भेष्टकानां राजसूयत्वम् । इदानीं तयोरेव विशेषमाह—वरुण-
सवः वरुणयज्ञो राजसूयं अग्निसवश्चित्योऽग्निरिति तत्प्रधानत्वात्
याभ्यां तावीश्वरावभूताम् । 'चित्याऽग्निचित्ये च' इति निपात्यते ।
चेतव्यश्चित्यः । ताभ्यामिति । अग्नीवरुणाभ्यामनुज्ञायते । यद्वा—
ईश्वरः सूयते । षु प्रसवैश्वर्ययोः, कर्मणि यत् । अपर आह—
ताभ्यामग्निसववरुणसवाभ्यां स्तूयते स्तोत्रीयते ताभ्यामुभाभ्यां अने-
नेष्टं भवतीति तद्वदीश्वरो भवतीत्यर्थः । अथो इत्यादि । गतम् ।
अग्निं चितवान् 'अग्नौ चेः' इति भूते क्विप् ॥

[2]आपो भवन्तीति इष्टकास्वरूपविधिः ॥ अत्र च 'अमृतं वा

व्या यदपोऽग्नेरधस्तादुपदधाति भ्रा-
तृव्याभिभूत्यै भवत्यात्मना पराऽस्य
भ्रातृव्यो भवत्यमृतम् ॥ ५ ॥ वा
आपस्तस्मादद्भिरवतान्तमभिषिञ्च -
न्ति नार्तिमार्च्छति सर्वमायुरेति य-
स्यैता उपधीयन्ते य उ चैना एवं

वान्ति । आपः । वै । अग्नेः । भ्रातृव्याः । यत् । अपः । अग्नेः । अधस्तात् । उपदधातीत्युप–दधाति । भ्रातृव्याभिभूत्या इति भ्रातृव्य–अभिभूत्यै । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवन्ति । अमृतम् ॥५॥ वै । आपः । तस्मात् । अद्भिरित्यत्–भिः । अवतान्तमित्यव–तान्तम् । अभीति । सिञ्चन्ति । न । आर्तिम् । एति । ऋच्छति । सर्वम् । आयुः । एति । यस्य । एताः । उपधीयन्त इत्युप–धीयन्ते ।

आपः* इत्यादिस्तुतिर्भविष्यति । प्रागेवाधस्तात्त्वं विदधाति—आपो वा इत्यादि । यस्मादापोऽग्नेश्शात्रवः तस्मादग्नेरधस्तादेना उपदधाति भ्रातृव्याभिभवाय भवति । ततः स्वयं भूतिमान् सम्पद्यते, भ्रातृव्यश्च विनष्टो भवति ॥

[3]अमृतं वा इत्यादिरपां स्तुतिः ॥ अवतान्तं मूर्छितं अद्भिरभिषिञ्चन्ति । सर्वमायुरेत्युपधाता आसां, यश्चैवं वेदिता ॥

*सं. ५-६-२.३

वेदान्नं वा आपः पशव आपोऽन्नं
पशवोऽन्नादः पशुमान्भवति यस्यैता
उपधीयन्ते य उ चैना एवं वेद द्वा-
दश भवन्ति द्वादश मासास्संवथ्स-
रस्संवथ्सरेणैवास्मै ॥ ६ ॥ अन्नम-
वं रुन्धे पात्राणि भवन्ति पात्रे वा

यः । उ । च । एनाः । एवम् । वेद । [4]अन्नम् । वै । आपः । पशवः । आपः । अन्नम् । पशवः । अन्नाद इत्यन्न—अदः । पशुमानिति पशु—मान् । भवति । यस्य । एताः । उपधीयन्त इत्युप—धीयन्ते । यः । उ । च । एनाः । एवम् । वेद । [5]द्वादश । भवन्ति । द्वादश । मासाः । संवत्सर इति सं—वत्सरः । संवत्सरेणेति सं—वत्सरेण । एव । अस्मै ॥ ६ ॥ अन्नम् । अवेति । रुन्धे । [6]पात्रा-

[4]अन्नं वा इत्यादि स्तुत्यन्तरमपाम् ॥ अन्नपशुसाधनात्वतोच्छ-ब्द्यमपाम् । इदानीं प्रशस्ततरत्वं पशूनामाह—अन्नं पशव इति । अन्नस्यापि हेतवः पशव इति तेषामपि हेतव आप इति तासामुप-धाता वेदिता च अन्नादः पशुमांश्च भवति ॥

[5]द्वादशेति ॥ सङ्ख्याविधिर्गतः* ॥

[6]पात्राणीति ॥ जलाधाररूपाणि । आद्वादशादिति । द्वादशमभि-

*सं. ५-४-८.

अन्नमद्यते सयोन्येवान्नमवं रुन्ध
आ द्वादशात्पुरुषादन्नमत्त्यथो पात्रान्न
छिद्यते यस्यैता उपधीयन्ते य उ चै-
ना एवं वेद कुम्भाश्च कुम्भीश्च मि-
थुनानि भवन्ति मिथुनस्य प्रजात्यै प्र
प्रजया पशुभिर्मिथुनैर्जायते यस्यै-
ता उपधीयन्ते य उ ॥ ७ ॥ चैना

णि । भवन्ति । पात्रे । वै । अन्नम् । अद्यते । स-
योनीति स-योनि । एव । अन्नम् । अवेति । रुन्धे ।
एति । द्वादशात् । पुरुषात् । अन्नम् । अत्ति । अथो
इति । पात्रात् । न । छिद्यते । यस्य । एताः । उपधीय-
न्त इत्युप-धीयन्ते । यः । उ । च । एनाः । एवम् । वेद ।
[7]कुम्भाः । च । कुम्भीः । च । मिथुनानि । भवन्ति ।
मिथुनस्य । प्रजात्या इति प्र-जात्यै । प्रेति । प्रजयेति
प्र-जया । पशुभिरिति पशु-भिः । मिथुनैः । जायते ।
यस्य । एताः । उपधीयन्त इत्युप-धीयन्ते । यः । उ ।

व्याप्य अन्नस्य अत्ता भवति । अपि च पात्रत्वान्न छिद्यते उप-
धाता वेदिता च । विश्वजनादित्वात्तुगभावः ॥

[7]पात्राणि विशेष्यन्ते—कुम्भाश्चेत्यादि ॥ गतम् ॥

एवं वेद शुग्वा अग्निस्सोऽध्वर्युं यजमा-
नं प्रजाश्शुचाऽर्पयति यदप उपदधा-
ति शुचमेवास्य शमयति नार्तिमा-
र्छत्यध्वर्युर्न यजमानश्शाम्यन्ति प्र-
जा यत्रैता उपधीयन्तेऽपां वा एतानि
हृदयानि यदेता आपो यदेता अप उ-
पदधाति दिव्याभिरेवैनास्सꣳसृज-

॥७॥ च । एनाः । एवम् । वेद । [8]शुक् । वै । अग्निः ।
सः । अध्वर्युम् । यजमानम् । प्रजा इति प्र-
जाः । शुचा । अर्पयति । यत् । अपः । उपदधा-
तीत्युप-दधाति । शुचम् । एव । अस्य । शमय-
ति । न । आर्तिम् । एति । ऋच्छति । अध्वर्युः ।
न । यजमानः । शाम्यन्ति । प्रजा इति प्र-जाः ।
यत्र । एताः । उपधीयन्त इत्युप-धीयन्ते । [9]अ-
पाम् । वै । एतानि । हृदयानि । यत् । एताः ।
आपः । यत् । एताः । अपः । उपदधातीत्युप-
दधाति । दिव्याभिः । एव । एनाः । समिति । सृ-

[8]शुगित्यादि ॥ शोचयिता तापयिताऽग्निः अध्वर्युर्यजमानं प्रजाश्च शोकेन पीडयति । अपामुपधानेन स दोषः परिहृतो भवति ॥

[9]अपां वा इत्यादि ॥ समुदायावयवभावेन स्तुतिः । प्रियतरत्वा-

तिं वर्षुकः पर्जन्यः ॥ ८ ॥ भवति यो वा एतासामायतनं क्लृप्तिं वेदा-
यतनवान्भवति कल्पतेऽस्मा अनु-
सीतमुपं दधात्येतद्वा आसामायतं-
नमेषा क्लृप्तिर्य एवं वेदायतनवान्भ-

जति । वर्षुकः । पर्जन्यः ॥८॥ भवति । [10]यः । वै । एतासाम् । आयतनमित्या–यतनम् । क्लृप्तिम् । वेद । आयतनवानित्यायतन–वान् । भवति । क-ल्पते । अस्मै । अनुसीतमित्यनु–सीतम् । उपेति । दधाति । एतत् । वै । आसाम् । आयतनमित्या–यतनम् । एषा । क्लृप्तिः । यः । एवम् । वेद । आ-यतनवानित्यायतन–वान् । भवति । कल्पते । अ-

हृदयत्वम् । दिव्याभिरिति । दिव्याभिर्वृष्ट्यादिभिः एना अवयवभूतात्मिकाः संमृजति मिश्रयति । ततो वर्षणशीलः पर्जन्यस्स्यात् हृदयस्थानीयानामासां इहोपहितत्वात् । 'लपपत' इत्यादिना उकञ् ॥

[10]यो वा इत्यादि ॥ आयतनं सीतात्मकं स्थानं क्लृप्तं उपधानविशेषं सामर्थ्यं वा एतदुभयं यो वेद स आयतनवान् भवति । कल्पते चास्मै अभिमतं सामर्थ्यं वा अस्मै जायते । अनुसीतमित्यादि । विभक्त्यर्थे अव्ययीभावः । सीतास्वित्यर्थः । एतदिति । सीताः ॥

वति कल्पतेऽस्मै द्वन्द्वमन्या उप द-
धाति चतस्रो मध्ये धृत्या अन्नं वा
इष्टका एतत्खलु वै साक्षादन्नं यदेष
चरुर्यदेतं चरुमुपदधाति साक्षात् ॥
१ ॥ एवास्मा अन्नमव रुन्धे मध्य-
त उप दधाति मध्यत एवास्मा अ-

स्मै । [11]द्वन्द्वमिति द्वं–द्वम् । अन्याः । उपेति । द-
धाति । चतस्रः । मध्ये । धृत्यै । [12]अन्नम् । वै ।
इष्टकाः । एतत् । खलु । वै । साक्षादिति स–अ-
क्षात् । अन्नम् । यत् । एषः । चरुः । यत् । एतम् ।
चरुम् । उपदधातीत्युप–दधाति । साक्षादिति स–
अक्षात् ॥ १ ॥ एव । अस्मै । अन्नम् । अवेति ।
रुन्धे । [13]मध्यतः । उपेति । दधाति । मध्यतः ।

[11]द्वन्द्वमित्यादि ॥ यज्ञपात्रप्रयोगे 'द्वन्द्वम्' इति निपात्यते। अन्या आहुतयः प्राच्यादिषु मध्ये तु चतस्रः । तथा कृतं धारणाय भवति समर्थम् ॥

[12]अन्नं वा इति ॥ चरुविधिः । तत्साधनत्वात् ताच्छब्द्यम् । अपामित्यष्टकानां न मुख्यं, चरुस्तु साक्षादेव अव्यवधानेनान्नानामिति । यदेतमित्यादि । गतम् ॥

[13]मध्यत इति ॥ सर्वासामिष्टकानां मध्यत उदरे अन्नं दधाति तस्मान्मध्यत इति । मध्यमे वयसि भूयिष्ठं अन्नमद्यते ॥

न्नं दधाति तस्मान्मध्यतोऽन्नमद्यते.
बार्हस्पत्यो भवति ब्रह्म वै देवा-
नां बृहस्पतिर्ब्रह्मणैवास्मा अन्नमव
रुन्धे ब्रह्मवर्चसमसि ब्रह्मवर्चसाय
त्वेत्याह तेजस्वी ब्रह्मवर्चसी भवति
यस्यैष उपधीयते य उ चैनमेवं वेद ॥

एव । अस्मै । अन्नम् । दधाति । तस्मात् । मध्य-तः । अन्नम् । अद्यते । [14]बार्हस्पत्यः । भवति । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । अन्नम् । अवेति । रुन्धे । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । असि । ब्रह्मवर्चसायेति ब्रह्म-व-र्चसाय । त्वा । इति । आह । तेजस्वी । ब्रह्मवर्च-सीति ब्रह्म-वर्चसी । भवति । यस्य । एषः । उ-पधीयत इत्युप-धीयते । यः । उ । च । एनम् । एवम् । वेद ॥ १० ॥

अमृतमस्मै जायते यस्यैता उपधीयन्ते य
उ पर्जन्यं उपदधाति साक्षात्सप्तच-
त्वारिंशच्च ॥ २ ॥

---

[14]बार्हस्पत्य इत्यादि ॥ गतम् ॥

इति पञ्चमे षष्ठे द्वितीयोनुवाकः.

भूतेष्टका उप दधात्यत्रात्र वै मृत्यु-
र्जायते यत्रयत्रैव मृत्युर्जायते तत
एवैनमव यजते तस्मादग्निचित्सर्व-
मायुरेति सर्वे ह्यस्य मृत्यवोऽवेष्टा-

[1]भूतेष्टका इति भूत-इष्टकाः । उपेति । दधाति । अत्रात्रेत्यत्र-अत्र । वै । मृत्युः । जायते । यत्रयत्रेति यत्र-यत्र । एव । मृत्युः । जायते । ततः । एव । एनम् । अवेति । यजते । तस्मात् । अग्निचिदित्यग्नि-चित् । सर्वम् । आयुः । एति । सर्वे । हि । अस्य । मृत्यवः । अवेष्टा इत्यव-इष्टाः । तस्मात् । अग्निचिदित्यग्नि-चित् । न । अभिचरि-

[1]भूतेष्टका इत्यादि ॥ भूतानि पृथिव्यादीनि तत्सम्बन्धिन्य इष्टकाः भूतेष्टकाः 'पृथिव्यै स्वाहा'* इत्येवं मन्त्राकारः । अत्रात्रेति । सर्वत्र पृथिव्या एकदेशे मृत्युर्जायते यत्रयत्र जायते ततस्सर्वस्मादेनं मृत्युमवयजते निवारयति भूतेष्टकाभिः । उभयत्रापि 'अनुदात्तञ्च' इति द्वितीयोऽनुदात्तः । तस्मादित्यत्रैव हेतुमाह—सर्वे हि मृत्यवोऽवेष्टाः निराकृताः । तत्सर्वमायुः पुरुषायुषं जीवति । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । तस्मादिति । एवं निरस्तमृत्युत्वादग्निचित् नाभिचरितव्यः न मारयितव्यः । कृत्यार्थे तवैप्रत्ययः । 'तवैचान्तश्च युगपत्' इति गतेः प्रकृतिस्वरत्वम्, प्रत्ययस्य चान्तोदात्तत्वम् । यद्यभिचरेदेनं

*सं. ७-५-११.

स्तस्मादग्निचिन्नाभिचरितवै प्रत्यगे-
नमभिचारस्स्तृणुते सूयते वा एष
योऽग्निं चिनुते देवसुवामेतानि ह-
वीꣳषि भवन्त्येतावन्तो वै देवानाꣳ
सवास्त एव ॥ ११ ॥ अस्मै सवा-

तवा इत्यभि–चरितवै । प्रत्यक् । एनम् । अभिचार इत्यभि–चारः । स्तृणुते । सूयते । वै । एषः । यः । अग्निम् । चिनुते । देवसुवामिति देव–सुवाम् । एतानि । हवीꣳषि । भवन्ति । एतावन्तः । वै । देवानाम् । सवाः । ते । एव ॥ ११ ॥ अस्मै । सवान् ।

अभिचरितारमेव अभिचारः प्रत्यक् स्तृणुते प्रतिमुखमागत्य मारयति ॥

सूयते वा इत्यादि ॥ अग्निं चिन्वानो हि अग्निना सूयते ईश्वरः क्रियते । कर्मणि यत् । देवसुवामिति । देवानां सुवते ईशते इति देवसुत इति वक्तव्ये 'उगवादीनाम्' इति सुवतेस्तुगपवाद औकारः । ते च 'अग्नये गृहपतये'* इत्याम्नाताः अग्न्यादयोऽष्टौ देवाः । तेषामेतानि हवींषि भवन्ति 'अग्नये गृहपतये पुरोडाशमष्टाकपालं'* इत्यादीनि । तान्यत्र कर्तव्यानीति गम्यते । एतावन्त इति । एतावन्त्येव देवतानामैश्वर्यसाधनानि यान्यग्न्यादीनि हवींषि । सुवतेः करणे अप् । 'सवजवौ छन्दसि' इत्यन्तोदात्तत्वम् । तस्मात्ते सवाः स्वस्वामिनोऽग्न्यादयः अस्मै यज-

*सं. १-८-१०.

न्प्र यच्छन्ति त एनꣳ सुवन्ते स-
वोऽग्निर्वरुणसवो राजसूयं ब्रह्मसव-
श्चित्यो देवस्य त्वा सवितुः प्रसव
इत्याह सवितृप्रसूत एवैनं ब्रह्मणा

प्रेति । यच्छन्ति । ते । एनम् । सुवन्ते । [3]सवः । अ-
ग्निः । वरुणसव इति वरुण-सवः । राजसूयमिति
राज-सूयम् । ब्रह्मसव इति ब्रह्म-सवः । चित्यः ।
देवस्य । त्वा । सवितुः । प्रसव इति प्र-सवे । इति ।
आह । सवितृप्रसूत इति सवितृ-प्रसूतः । एव । ए-
नम् । ब्रह्मणा । देवताभिः । अभीति । सिञ्चति ।
अन्नस्यान्नस्येत्यन्नस्य-अन्नस्य । अभीति । सिञ्चति ।
[4]अन्नस्यान्नस्येत्यन्नस्य-अन्नस्य । अवरुद्ध्यै इत्य-

मानाय सवान् ऐश्वर्याणि प्रयच्छन्ति । त एताग्न्यादय एनं सुवन्ते अनुजानन्ति ऐश्वर्याय प्रेरयन्तीत्यर्थः । षू प्रेरणे ॥

[3]सवोग्निरित्यादिरभिषेकविधिः ॥ ऐश्वर्यहेतुरयमग्निः तत्र वरुणैश्वर्यहेतुः राजसूयं, ब्रह्मैश्वर्यहेतुश्चित्योग्निः । तस्मात् 'देवस्य त्वा'* इत्यभिषेके ब्रह्मैश्वर्यलाभ इति । राजसूयग्रहणं तत्तुल्यतां चित्यस्याग्नेः प्रदर्शयितुम् ॥

[4]अन्नस्यान्नस्येति ॥ सर्वौषधेनाभिषिञ्चति । विभक्तिव्यत्ययः । सर्वान्नाभिषेकः सर्वान्नलाभाय भवति ॥

*सं. १-७-१०.

देवताभिरभिषिञ्चत्यन्नस्यान्नस्याभि-
षिञ्चत्यन्नस्यान्नस्यावरुद्ध्यै पुरस्ता-
त्प्रत्यञ्चमभिषिञ्चति पुरस्ताद्धि प्रती-
चीनमन्नमद्यते शीर्षतोऽभिषिञ्चति
शीर्षतो ह्यन्नमद्यत आ मुखादन्व-
वस्रावयति ॥ १२ ॥ मुखत एवा-
स्मा अन्नाद्यं दधात्यग्नेस्त्वा साम्रा-
ज्येनाभिषिञ्चामीत्याहैष वा अग्नेस्स-

व–रुद्ध्यै । [5]पुरस्तात् । प्रत्यञ्चम् । अभीति । सिञ्चति । पुरस्तात् । हि । प्रतीचीनम् । अन्नम् । अद्यते । [6]शीर्षतः । अभीति । सिञ्चति । शीर्षतः । हि । अन्नम् । अद्यते । एति । मुखात् । अन्ववस्रावयतीत्यनु–अवस्रावयति ॥ १२ ॥ मुखतः । एव । अस्मै । अन्नाद्यमित्यन्न–अद्यम् । दधाति । [7]अग्नेः । त्वा । साम्राज्येनेति सां–राज्येन । अभीति । सि-

[5]पुरस्तादित्यादि । गतम् ॥

[6]शीर्षत इति ॥ शिरस्त आरभ्य आमुखादविच्छिन्नमन्ववस्रावयति अस्य मुखे अन्नाद्यं स्थापितं भवति । ‘ आद्यादिभ्यस्तसिः ’ ॥

[7]अग्नेस्त्वेत्यादि ॥ मन्त्रावयवस्तुतिः । अग्नेः सवः अग्नेरैश्वर्यं ब्रह्मणेवोदितेन ब्रह्मैश्वर्यलाभः । गतमन्यत् ॥

वस्तेनैवैनमभिषिञ्चति बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनमभिषिञ्चतीन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीत्याहेन्द्रियमेवास्मिन्नुपरिष्टाद्दधात्ये-तत् ॥ १३ ॥ वै राजसूयस्य रूपं य एवं विद्वानग्निं चिनुत उभावेव लो-

ञ्चामि । इति । आह । एषः । वै । अग्नेः । सवः । तेन । एव । एनम् । अभीति । सिञ्चति । बृहस्पतेः । त्वा । साम्राज्येनेति सां-राज्येन । अभीति । सिञ्चामि । इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । एनम् । अभीति । सिञ्चति । इन्द्रस्य । त्वा । साम्राज्येनेति सां-राज्येन । अभीति । सिञ्चामि । इति । आह । इन्द्रियम् । एव । अस्मिन्न् । उपरिष्टात् । दधाति । [8]एतत् ॥ १३ ॥ वै । राजसूयस्येति राज-सूयस्य । रूपम् । यः । एवम् । विद्वान् । अग्निम् । चिनुते । उभौ । एव । लोकौ ।

---

[8]एतद्वा इति ॥ राजसूयस्य स्वरूपमभिषेकाख्यं एतदग्नौ क्रि-

कावभि जयति यश्च राजसूयेनेजा-
नस्य यश्चाग्निचित इन्द्रस्य सुषुवा-
पास्यं दशधेन्द्रियं वीर्यं परा॑ऽपतत्त-
द्देवास्सौत्रामण्या समभरन्थ्सूयते
वा एष योऽग्निं चिनुतेऽग्निं चित्वा
सौत्रामण्या यजेतेन्द्रियमेव वीर्यꣳ
संभृत्यात्मन्धत्ते ॥ १४ ॥

अभीति । जयति । यः । च । राजसूयेनेति राज-सूयेन । इजानस्य । यः । च । अग्निचित इत्यग्नि-चितः । [1]इन्द्रस्य । सुषुवाणस्य । दशधेति दश-धा । इन्द्रियम् । वीर्यम् । परेति । अपतत् । तत् । देवाः । सौत्रामण्या । समिति । अभरन् । सूयते । वै । एषः । यः । अग्निम् । चिनुते । अग्निम् । चित्वा । सौत्रामण्या । यजेत । इन्द्रियम् । एव । वीर्यम् । सम्भृत्येति सं-भृत्य । आत्मन् । धत्ते ॥ १४ ॥

त एवान्ववस्त्रावयत्येतदष्टाचत्वारिꣳशच्च ॥ ३ ॥

यते । तस्मादेवं विदित्वाऽग्निं चिन्वान उभौ लोकावभिजयति । राजसूययाजिनोऽग्निचितश्च ॥.

[1]इन्द्रस्येत्यादि ॥ सौत्रामण्या विधिः । सुषुवाणस्य लब्धैश्वर्यस्य इन्द्रस्य दशधा विशीर्णमिन्द्रियं च पराऽपतत् । तन्मा पराऽपतदि-

# सजूरब्दोऽयावभिस्सजूरुषा अरुणीभिस्सजूस्सूर्य एतशेन सजोषावश्विना

[1]सजूरिति स—जूः । अब्दः । अयावभिरित्ययाव—भिः । सजूरिति स—जूः । उषाः । अरुणीभिः । सजूरिति स—जूः । सूर्यः । एतशेन । स-

त्यग्निचयनानन्तरं सौत्रामण्या यजेत तत्तदिन्द्रियं वीर्यं च संभृत्याविशीर्णरूपं कृत्वा आत्मनि स्थापयति । 'सुपां सुलुक्' इति सप्तम्या लुक्, 'नङिसंबुद्ध्योः' इति नलोपाभावः ॥

इति पञ्चमे षष्ठे तृतीयोनुवाकः.

[1]दर्भस्तम्बे स्रुवाहुतीरभिजुहोति—सजूरब्द इत्यादिभिः ॥ वाक्यस्यापरिसमाप्तत्वात् घृतेन स्वाहेति सर्वत्रानुषज्यते । सर्वा एकपदाः त्रिष्टुभः । अन्त्याऽधिकाक्षरा । केचिद्घृतेनेत्यस्मादनुषङ्गाद्याश्वतस्रो गायत्रीराहुः । सजूस्समानप्रीतिरब्दः संवत्सरः । केन अयावभिः मासैः ते हि संवत्सरान्न यान्ति । तादृशो ह्यब्दः प्रजानां समृद्ध्यै भवति । 'संवत्सरो वा अब्दो मासा अयावाः' इति ब्राह्मणम् । यातेः 'आतो मनिन्' इति वनिप् । ब्राह्मणे त्वौणादिको वप्रत्ययः । जुषेः क्विपि 'ससजुषोरुः' इति रुत्वम् । 'समानस्य छन्दसि' इति सभावः, 'परादिश्छन्दसि' इत्युत्तरपदान्तोदात्तत्वम् । सजूरब्दो यावभिर्यथा भवति तदनुरूपं घृतेन स्वाहुतं करोति दर्भस्तम्बमभिजुहोति । एतेन शिष्टं व्याख्यातम् । उषाः प्रसिद्धाः अरुण्यो गावः ता हि तत्र मोदन्ते । सा च तादृशी प्रजानां भूतये

दꣳसोभिस्सजू रग्निर्वैश्वानर इडाभिर्घृतेन स्वाहा संवथ्सरो वा अब्दो मासा अयावा उषा अरुणीस्सूर्य एतंश इमे अश्विना संवथ्सरोऽग्निर्वैश्वानरः पशव इडा पशवो घृतꣳ संव-

जोषाविति स–जोषौ । अश्विना । दꣳसोभिरिति दꣳसः–भिः । सजूरिति स–जूः । अग्निः । वैश्वानरः । इडाभिः । घृतेन । स्वाहा । [2]संवत्सर इति सं–वत्सरः । वै । अब्दः । मासाः । अयावाः । उषाः । अरुणीः । सूर्यः । एतंशः । इमे इति । अश्विना । संवत्सर इति सं–वत्सरः । अग्निः । वैश्वानरः । पशवः । इडा । पशवः । घृतम् । संव-

भवति । एतशेन श्वेतेन सजूस्सूर्यः प्रजानां पुष्ट्यै भवति । अश्विनौ द्यावापृथिव्यौ व्यापकेनादित्येन तद्वत्यौ । 'इमे अश्विना' इति च ब्राह्मणम् । अश्वित्वेन स्तुतेः पुल्लिङ्गता । तौ सजोषसौ दंसोभिः आश्चर्यकर्मभिर्जन्तुभिः सजोषाः वैश्वानरोग्निस्संवत्सरात्मा इडाभिः पशुभिस्सजूः ॥

[2]अत्रैव ब्राह्मणं—संवत्सरो वा इत्यादि ॥ पदद्वयं व्याचष्टे— संवत्सरो वा अब्दो मासा अयावा इति । उषा अरुणीः सूर्य एतश इति । स्वरूपमात्रोपादानेन निगदसिद्धा एवैत इति दर्श-

त्सरं पुशवोऽनु प्र जायन्ते संवत्सुरेणैवास्मै पुशून्प्र जनयति दर्भस्तम्बे जुहोति यत् ॥ १५ ॥ वा अस्या अमृतं यद्वीर्यं तद्दर्भास्तस्मिंजुहोति प्रैव जायतेऽन्नादो भवति यस्यैवं जुहोत्येता वै देवता अग्नेः पुरस्ताद्भा-

त्सरमिति सं-वत्सरम् । पुशवः । अनु । प्रेति । जायन्ते । संवत्सरेणेति सं-वत्सरेण । एव । अस्मै । पुशून् । प्रेति । जनयति । [3]दर्भस्तम्ब इति दर्भ-स्तम्बे । जुहोति । यत् ॥१५॥ वै । अस्याः । अमृतम् । यत् । वीर्यम् । तत् । दर्भाः । तस्मिन् । जुहोति । प्रेति । एव । जायते । अन्नाद इत्यन्न-अदः । भवति । यस्य । एवम् । जुहोति । [4]एता । 

यति । इमे इति । इयं चासौ च इमे द्यावापृथिव्यौ । 'त्यदादीनां यत्परम्' इतीदमश्शेषः । संवत्सरोऽग्निरित्यादि । गतम् । पशवो घृतमिति । तद्धेतुत्वात् संवत्सरमनुप्रजायन्ते पशवः । लक्षणेऽनोः कर्मप्रवचनीयत्वम् । संवत्सरेणेति । संवत्सरत्वाद्वैश्वानरस्य अग्नेः ॥

[3]दर्भस्तम्ब इति ॥ एतैर्मन्त्रैः । यद्वा इत्यादि । गतम् । अमृतं अमरणहेतुः ॥

[4]एता वा इति ॥ अब्दादयो देवता अग्नेरपि पूर्वभागभाजः

गास्ता एव प्रीणात्यथो चक्षुरेवाग्नेः पुरस्तात्प्रति दधात्यनन्धो भवति य एवं वेदापो वा इदमग्रे सलिलमासीत्स प्रजापतिः पुष्करपर्णे वातो भूतोऽलेलायत्सः ॥ १६ ॥ प्रतिष्ठां

वै । देवताः । अग्नेः । पुरस्ताद्भागा इति पुरस्तात्-भागाः । ताः । एव । प्रीणाति । अथो इति । चक्षुः । एव । अग्नेः । पुरस्तात् । प्रतीति । दधाति । अनन्धः । भवति । यः । एवम् । वेद । आपः । वै । इदम् । अग्रे । सलिलम् । आसीत् । सः । प्रजापतिरिति प्रजा-पतिः । पुष्करपर्ण इति पुष्कर-पर्णे । वातः । भूतः । अलेलायत् । सः ॥ १६ ॥ प्रतिष्ठामिति प्रति-स्थाम् । न । अ-

ताः प्रीणयत्यनेन होमेन । अपि च पुरस्ताद्धोमेनाग्नेः चक्षुः प्रतिदधाति । एवं वेदिताऽप्यनन्धो भवति, किं पुनः कर्ता ॥

[5]आपो वा इत्यादि ॥ चित्यत्वेन पृथिव्यास्स्तुतिः । इदं विश्वं अग्रे आदौ सलिलमात्रमासीत् प्रत्यस्तमितसमस्तविकारं सर्वमादौ सलिलमेवासीत् । यदिदमब्विकारं सर्वं आदौ सलिलमेवासीत् । तदानीं प्रजापतिः पुष्करपर्णे पद्मपत्रे तत्प्रभवे वातो भूतः वात इव भूत्वा अलेलायात् । लीयतेर्यङ्लुगन्तात् लुङि व्यत्य-

नाविन्दत् स एतदपां कुलायमप-
श्यत्तस्मिन्नग्निमचिनुत तदियमभव-
त्ततो वै स प्रत्यतिष्ठद्यां पुरस्तादुपा-
दधात्तच्छिरोऽभवत्सा प्राची दिग्यां
दक्षिणत उपादधात्स दक्षिणः प-
क्षोऽभवत्सा दक्षिणा दिग्यां पश्चादु-

विन्दत । सः । एतत् । अपाम् । कुलायम् । अ-
पश्यत् । तस्मिन्न् । अग्निम् । अचिनुत । तत् ।
इयम् । अभवत् । ततः । वै । सः । प्रतीति । अ-
तिष्ठत् । याम् । पुरस्तात् । उपादधादित्युप-अद-
धात् । तत् । शिरः । अभवत् । सा । प्राची ।
दिक् । याम् । दक्षिणतः । उपादधादित्युप-अद-
धात् । सः । दक्षिणः । पक्षः । अभवत् । सा । द-
क्षिणा । दिक् । याम् । पश्चात् । उपादधादित्युप-
अदधात् । तत् । पुच्छम् । अभवत् । सा । प्रती-

येन शप्, वृद्धिश्च । लेलेतिवा कण्ड्वादिः । तदानीं प्रतिष्ठामवस्थि-
तां नाविन्दत नालभत पुष्करपर्णस्य लोलत्वादात्मनश्च वातभूत-
त्वात् । स तदानीमेव अपां कुलायं शैवलमित्युपश्यत् फेन-
मित्यमन्यत । तस्मिन्नग्निमचिनुत तदियं पृथिवी जाता । प्रजापति-
श्च तत्र प्रतिष्ठितोऽभवत् । तत्र यामिष्टकां पूर्वस्यां दिश्युपादधात्

पादधात्तत्पुच्छमभवथ्सा प्रतीची दि-
ग्यामुत्तरत उपादधात् ॥ १७ ॥ स
उत्तरः पक्षोऽभवथ्सोदीची दिग्या-
मुपरिष्टादुपादधात्तत्पृष्ठमभवथ्सोर्ध्वा
दिगियं वा अग्निः पञ्चेष्टकस्तस्मा-
द्यदस्यां खनन्त्यभीष्टकां तृन्दन्त्यभि
शर्करा सर्वा वा इयं वयोभ्यो

ची । दिक् । याम् । उत्तरत इत्युत्-तरतः । उ-
पादधादित्युप-अदधात् ॥ १७ ॥ सः । उत्तर इ-
त्युत्-तरः । पक्षः । अभवत् । सा । उदीची । दि-
क् । याम् । उपरिष्टात् । उपादधादित्युप-अदधात् ।
तत् । पृष्ठम् । अभवत् । सा । ऊर्ध्वा । दिक् ।
[6]इयम् । वै । अग्निः । पञ्चेष्टक इति पञ्च-इष्टकः ।
तस्मात् । यत् । अस्याम् । खनन्ति । अभीति ।

तदस्याग्नेश्शिरोऽभवत् प्रथमोऽत्पन्नत्वात् । ततः प्रभृति सा प्राची दिगासीत् । यां दक्षिणत इत्यादि । गतम् ॥

[6]इयं वा इति ॥ इयं पृथिवी पञ्चेष्टकोग्निः तस्मादस्यां यत्खनन्ति तदिष्टकामभिक्रन्दन्ति पूर्वं प्रजापतिनोपहितामच्छिद्रं यन्ति । उतृदिर् हिंसानादरयोः, रौधादिकः । अभिशर्करामिति । तृन्दन्तीत्येव ॥

नक्तं दृशे दीप्यते तस्मादिमां वया-
ंसि नक्तं नाध्यासते य एवं वि-
द्वानग्निं चिनुते प्रत्येव ॥ १८ ॥ ति-
ष्ठत्यभि दिशो जयत्याग्नेयो वै ब्रा-
ह्मणस्तस्माद्ब्राह्मणाय सर्वासु दिक्ष्व-

इष्टकाम् । तृन्दान्ति । अभीति । शर्कराम् । [7]सर्वा । वै । इयम् । वयोभ्य इति वयः—भ्यः । नक्तम् । दृशे । दीप्यते । तस्मात् । इमाम् । वयांसि । नक्तम् । न । अधीति । आसते । यः । एवम् । विद्वान् । अग्निम् । चिनुते । प्रतीति । एव ॥ १८ ॥ तिष्ठति । अभीति । दिशः । जयति । [8]आग्नेयः । वै । ब्राह्मणः । तस्मात् । ब्राह्मणाय । सर्वासु । दिक्षु ।

[7]इदानीं पृथिव्या अग्नित्वं लोकवृत्तान्तेन विप्रतिपन्नान् प्रति समर्थयते—सर्वा वा इति ॥ सर्वेयं पृथिवी रात्रौ पक्षिभ्यो दीप्यते प्रकाशते दृशे द्रष्टुं यथा सर्वां पृथिवीं वयांसि पश्यन्ति । तस्मादिमां रात्रौ नाध्यासते वयांसि वृक्षादावेव शेरते भयात् । तस्मादेवं ज्ञात्वा चिन्वानः प्रतितिष्ठत्येव, दिशश्चाभि जयति ॥

[8]आग्नेयो वा इत्यादि ॥ उक्तं 'इयं वा अग्निः'* इति । यस्मादेवं तस्मादाग्नेयस्य अग्निना सहोत्पन्नत्वात् नित्यमग्निना

*सं. ५-६-४,6

ऋर्धुकः स्वामेव तद्दिशमन्वेत्यपां वा अग्निः कुलायं तस्मादापोऽग्निः हारुकास्स्वामेव तद्योनिं प्र विशन्ति॥११

अर्धुकम् । स्वाम् । एव । तत् । दिशम् । अन्विति । एति । अपाम् । वै । अग्निः । कुलायम् । तस्मात् । आपः । अग्निम् । हारुकाः । स्वाम् । एव । तत् । योनिम् । प्रेति । विशन्ति ॥११॥

यदंलेलायत्स उंत्तरत उपादधादेव द्वात्रिंशच्च ॥ ४ ॥

सम्बन्धोऽस्य ब्राह्मणस्य । 'सर्वत्राग्निकलिभ्याम्' इति ढक् । सर्वासु दिक्षु गमनमर्धुकं ऋद्धिशीलमग्नित्वात् सर्वासां दिशाम् । तदेवाह—स्वामेव आत्मभूतामेव दिशमत्येति अनु गच्छति । स्वार्थिक उकञ् ॥

अपां वा इत्यादि ॥ उक्तमेवार्थं प्रत्यक्षेण समर्थयते । यस्मादपामग्निः कुलायं निवासस्थानं उक्तेन न्यायेन पृथिव्या अग्नित्वात् तादर्थ्याद्वा अपां 'अग्नेरापः'* इति ततो निर्गतत्वात् । तस्मादापोऽग्निं हारुकाः अग्निं हृत्वा तमनुप्रविशन्तीः पश्याम औष्ण्योपलम्भात् पृथिवीं चानुप्रविशन्तीः पश्यामः । पूर्ववदुकञ्, 'न लोकाव्यय' इति षष्ठीप्रतिषेधः । ततः स्वामेव योनिं निवासं कारणं वा अनुप्रविशन्ति । तस्मादुपपन्नमस्याग्नित्वमिति ॥

इति पञ्चमकाण्डे षष्ठप्रश्ने चतुर्थोऽनुवाकः.

*तै. उ. २-१.

संवथ्सरमुख्यं भृत्वा द्वितीये संव-
थ्सर आग्नेयमष्टाकपालं निर्वपेदैन्द्र-
मेकादशकपालं वैश्वदेवं द्वादशक-
पालं बार्हस्पत्यं चरुं वैष्णवं त्रि-
कपालं तृतीये संवथ्सरेऽभिजिता
यजेत यदष्टाकपालो भवत्यष्टाक्षरा

[1]संवत्सरमिति सं-वत्सरम् । उख्यम् । भृत्वा । द्वितीये । संवत्सर इति सं-वत्सरे । आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपेत् । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । वैश्वदेवमिति वैश्व-देवम् । द्वादशकपालमिति द्वा-दश-कपालम् । बार्हस्पत्यम् । चरुम् । वैष्णवम् । त्रिकपालमिति त्रि-कपालम् । तृतीये । संवत्सर इति सं-वत्सरे । अभिजितेत्यभि-जिता । यजेत । [2]यत् । अष्टाकपाल इत्यष्टा-कपा-

[1]संवत्सरमित्यादिस्तावः चितेऽग्नौ गुणविकारविधिः* । तत्रैवोख्यस्य संवत्सरभरणम्† । द्वितीये संवत्सरे आग्नेयादिनिर्वापः । तृतीये अभिजिता अग्निष्टोमेन यजेत ॥

[2]यदित्यादिरेषामष्टाकपालादीनां क्रमेण स्तुतिः । दाधार धारयति । छान्दसो लिट् । गायत्रीछन्दः दाधारेत्येव ॥

*गुणविकारः न विधिः. †भरणादि.

गायत्र्याग्नेयं गायत्रं प्रातस्सवनं प्रातस्सवनमेव तेन दाधार गायत्रीं छन्दो यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुगैन्द्रं त्रैष्टुभं माध्यंन्दिनꣳ सवनं माध्यंन्दिनमेव सवनं तेन दाधार त्रिष्टुभम् ॥ २० ॥ छन्दो यद्द्वादशकपालो भवति द्वादशाक्षरा जगती वैश्वदेवं जागतं तृतीयसवनं

लः । भवति । अष्टाक्षरेत्यष्टा–अक्षरा । गायत्री । आग्नेयम् । गायत्रम् । प्रातस्सवनमिति प्रातः–सवनम् । प्रातस्सवनमिति प्रातः–सवनम् । एव । तेन । दाधार । गायत्रीम् । छन्दः । यत् । एकादशकपाल इत्येकादश–कपालः । भवति । एकादशाक्षरेत्येकादश–अक्षरा । त्रिष्टुक् । ऐन्द्रम् । त्रैष्टुभम् । माध्यंदिनम् । सवनम् । माध्यंदिनम् । एव । सवनम् । तेन । दाधार । त्रिष्टुभम् ॥ २० ॥ छन्दः । यत् । द्वादशकपाल इति द्वादश–कपालः । भवति । द्वादशाक्षरेति द्वादश–अक्षरा । जगती । वैश्वदेवमिति वैश्व–देवम् । जागतम् । तृतीयसवन-

[3]यदेकादशकपाल इत्यादि ॥ व्याख्यातमेतेन ॥

तृतीयसवनमेव तेन दाधार जगतीं छन्दो यद्बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मैव तेन दाधार यद्वैष्णवस्त्रिकपालो भवति यज्ञो वै विष्णुर्यज्ञमेव तेन दाधार यत्तृतीये संवत्सरेऽभिजिता यजतेऽभिजित्यै यत्संवत्सरमुख्यं बिभर्तीममेव ॥२१॥ तेन लोकꣳ स्पृणोति

मिति तृतीय-सवनम् । तृतीयसवनमिति तृतीय-सवनम् । एव । तेन । दाधार । जगतीम् । छन्दः । यत् । बार्हस्पत्यः । चरुः । भवति । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्म । एव । तेन । दाधार । यत् । वैष्णवः । त्रिकपाल इति त्रि-कपालः । भवति । यज्ञः । वै । विष्णुः । यज्ञम् । एव । तेन । दाधार । यत् । तृतीये । संवत्सर इति सं-वत्सरे । अभिजितेत्यभि-जिता । यजते । अभिजित्या इत्यभि-जित्यै । [4]यत् । संवत्सरमिति सं-वत्सरम् । उख्यम् । बिभर्ति । इमम् । एव ॥ २१ ॥

---

[4]यत्संवत्सरमित्यादि ॥ संवत्सरकर्मस्तुतिः । इमं मनुष्यलोकं स्पृणोति प्रीणयति रक्षयतीत्यर्थः । स्पृ प्रीतौ । गतमन्यत् ॥

यद्द्वितीये संवथ्सरेऽग्निं चिनुतेऽन्त-
रिक्षमेव तेनं स्पृणोति यत्तृतीयें सं-
वथ्सरे यजंतेऽमुमेव तेनं लोकꣳ
स्पृंणोत्येतं वै परं आट्णारः कक्षी-
वाꣳ औशिजो वीतहंव्यश्श्रायस-
स्त्रसदंस्युः पौरुकुथ्स्यः प्रजाकांमा
अचिन्वत ततो वै ते सहस्रꣳसह-
स्रं पुत्रानंविन्दन्त प्रथंते प्रजयां

तेनं । लोकम् । स्पृणोति । यत् । द्वितीयें । संवत्सर इति सं-वत्सरे । अग्निम् । चिनुते । अन्तरिंक्षम् । एव । तेनं । स्पृणोति । यत् । तृतीयें । संवत्सर इति सं-वत्सरे । यजंते । अमुम् । एव । तेनं । लोकम् । स्पृणोति । [5]एतम् । वै । परंः । आट्णारः । कक्षीवानिति कक्षी-वान् । औशिजः । वीतहंव्य इति वीत-हंव्यः । श्रायसः । त्रसदंस्युः । पौरुकुत्स्य इति पौरु-कुत्स्यः । प्रजाकांमा इति प्रजा-कामाः । अचिंन्वत । ततः । वै । ते । सहस्रꣳसहस्रमिति

[5]एतं वा इत्यादि ॥ एतमग्निं परादयश्चत्वारः प्रजाकामा अचिन्वत । चित्वा च प्रत्येकं सहस्रं पुत्रानलभन्त ॥

पशुभिस्तां मात्रांमाप्नोति यां तेऽगंच्छन् य एवं विद्वानेतमग्निं चिनुते ॥ २२ ॥

प्रजापंतिरग्निमंचिनुत स क्षुरपंवि-

सहस्रं–सहस्रम् । पुत्रान् । अविन्दन्त । [6]प्रथंते । प्रजयेतिं प्र–जयां । पशुभिरितिं पशु–भिः । ताम् । मात्रांम् । आप्नोति । याम् । ते । अगंच्छन् । यः । एवम् । विद्वान् । एतम् । अग्निम् । चिनुते ॥२२॥

दाधार त्रिष्टुभंमिममेवैवं चत्वारि च ॥५॥

[1]प्रजापंतिरितिं प्रजा–पतिः । अग्निम् । अचिनुत । सः । क्षुरपंविरितिं क्षुर–पंविः । भूत्वा ।

[6]प्रथत इत्यादिविदुषस्स्तुतिः । मात्रां पुत्रपरिमाणम् । एवं विदित्वा चिन्वानः परादय इव सहस्रपुत्रो भवतीत्यर्थः । अत्र परादयस्संज्ञाः, आङ्गारादयः अपत्यप्रत्ययान्ताः ॥.

इति पञ्चमे षष्ठे पञ्चमोनुवाकः.

---

[1]प्रजापतिरित्यादि नित्य एव गुणविशेषविधिः ॥ क्षुरपविः क्षुरवन्निशिता धारा यस्य सः क्षुरपविः । तादृशो भूत्वा चितोग्निरतिष्ठत् दुरुपगम आसीत् । तं तादृशं देवा भीतास्सन्तो नोपायन्

भूत्वाऽतिष्ठत्तं देवा बिभ्यतो नोपा-
यन्ते छन्दोभिरात्मानं छादयित्वो-
पायन्तच्छन्दसां छन्दस्त्वं ब्रह्म वै
छन्दा॑ꣳसि ब्रह्मण एतद्रूपं यत्कृष्णा-
जिनं कार्ष्णी उपानहावुप मुञ्चते

आतिष्ठत् । तम् । देवाः । बिभ्यतः । न । उपेति । आयन्न् । ते । छन्दोभिरिति छन्दः—भिः । आत्मानम् । छादयित्वा । उपेति । आयन्न् । तत् । छन्दसाम् । छन्दस्त्वमिति छन्दः—त्वम् । [2]ब्रह्म । वै । छन्दाꣳसि । ब्रह्मणः । एतत् । रूपम् । यत् । कृष्णाजिनमिति कृष्ण—अजिनम् । [3]कार्ष्णी इति । उपानहौ । उपेति । मुञ्चते । छन्दोभिरिति छन्दः—भिः । एव । आत्मानम् । छादयित्वा । अग्निम् ।

नोपगन्तुं शक्ता अभवन् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । त इत्यादि । गतम् । छन्दोभिर्मन्त्रैः । तस्माच्छादनहेतुत्वात् छन्दस्त्वम् । छादयतेर्व्यत्ययेन नुम्भावः ॥

[2]ब्रह्म वा इत्यादि हेतुः ॥ ब्रह्मवर्चसहेतुत्वात् ब्रह्मण इति । तत एव हेतोः ॥

[3]कार्ष्णी इति विधिः ॥ कृष्णमृगविकारभूतः । 'प्राणिरजतादिभ्योऽञ्' इत्यञ्प्रत्ययः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । छन्दोभिरित्यादि । गतम् ॥

छन्दोभिरेवात्मानं छादयित्वाऽग्निमुप चरत्यात्मनोऽहिंसायै देवनिधिर्वा एष नि धीयते यदग्निः ॥ २३ ॥ अन्ये वा वै निधिमगुप्तं विन्दन्ति न वा प्रति प्र जानात्युखामा क्रामत्या- त्मानमेवाधिपां कुरुते गुप्त्या अथो

उपेति । चरति । आत्मनः । अहिंसायै । [4]देव- निधिरिति देव—निधिः । वै । एषः । नीति । धी- यते । यत् । अग्निः ॥ २३ ॥ अन्ये । वा । वै । निधिमिति नि—धिम् । अगुप्तम् । विन्दन्ति । न । वा । प्रति । प्रेति । जानाति । उखाम् । एति । क्रामति । आत्मानम् । एव । अधिपामित्यधि— पाम् । कुरुते । गुप्त्यै । [5]अथो इति । खलु । आ-

[4]देवनिधिरित्यादि ॥ गतम् । अग्निर्नाम देवानां निधिस्थानीयो नि- धीयते गुप्तं स्थाप्यते स यदि सम्यक् गुप्तो न स्यात् ततस्तमगु- प्तमन्ये वाऽनिधातारो लभेरन् । स्वयं वा न प्रति प्रजानाति इह मया निहितमिति न प्रत्यभिजानीयात् । तस्मान्नित्यात्मनोऽग्नेः गोपनथा- नीयमुखाक्रमणं पादेन कुर्यादिति विधिः । आत्मानमेवाधिकं पा- तारं कुरुते । पातेर्विच् । तच्च गुप्त्यै भवति । ततस्तमन्ये न वे- त्स्यन्ते, स्वयं च प्रत्यभिज्ञास्यतीति ॥

[5]अथो खल्वाहुरित्यादिराक्रमणनिन्दा । नैरृतिः निरृतिरिति दे-

खल्वांहुर्नाक्रम्येतिं नैरृत्युखा य-
दाक्रामेन्निरृत्या आत्मानमपि द-
ध्यात्तस्मान्नाक्रम्यां पुरुषशीर्षमुपं
दधाति गुप्त्या अथो यथां ब्रूयादेत-
न्मे गोपयेतिं तादृगेव तत् ॥२४॥
प्रजापतिर्वा अथर्वाऽग्निरेव दध्यङ्ङा-

हुः । न । आक्रम्येत्यां-क्रम्यं । इतिं । नैरृत-तीतिं नैः-ऋती । उखा । यत् । आक्रामेदित्यां-क्रमेत् । निरृत्या इति निः-ऋत्यै । आत्मानम् । अपीतिं । दध्यात् । तस्मात् । न । आक्रम्येत्यां-क्रम्यं । [6]पुरुषशीर्षमितिं पुरुष-शीर्षम् । उपेतिं । दधाति । गुप्त्यै । अथो इतिं । यथां । ब्रूयात् । एतत् । मे । गोपाय । इतिं । तादृक् । एव । तत् ॥ २४ ॥ [7]प्रजापतिरितिं प्रजा-पतिः ।

वता । तस्मादाक्रमणं निरृत्यै आत्मानमपिदध्यात् प्रक्षिपेत् । तस्मान्नाक्रम्योखामपिदध्यादिति ॥

[6]पुरुषशीर्षमिति विधिः ॥ निधेर्गुप्त्यर्थं प्रत्यभिज्ञानार्थं च कथमित्याह—अथो इत्यादि यथा कश्चिन्निधिस्थाने स्थापयित्वा ब्रूयात् एतन्मदीयं रक्षेति तादृङ्निधिगोपनं पुरुशशीर्षं इति ॥

[7]प्रजापतिर्वा इत्यादि ॥ इष्टकास्तुतिः । तत्र 'इन्द्रो दधीचो अ-

थर्वणस्तस्येष्टका अस्थान्येतꣳ ह
वाव तदृषिरभ्यनूवाचेन्द्रो दधीचो
अस्थभिरिति यदिष्टकाभिरग्निं चि-
नोति सात्मानमेवाग्निं चिनुते सा-
त्माऽमुष्मिँल्लोके भवति य एवं वे-

वै । अथर्वा । अग्निः । एव । दध्यङ् । आथर्वणः ।
तस्य । इष्टकाः । अस्थानि । एतम् । ह । वाव ।
तत् । ऋषिः । अभ्यनूवाचेत्यभि–अनूवाच । इ-
न्द्रः । दधीचः । अस्थभिरित्यस्थ–भिः । इति ।
यत् । इष्टकाभिः । अग्निम् । चिनोति । सात्मानमिति
स–आत्मानम् । एव । अग्निम् । चिनुते । सात्मेति
स–आत्मा । अमुष्मिन् । लोके । भवति । यः ।

स्थभिः '* इति श्रुतिविशेषानुरोधेन अग्नेरस्थित्वेनेष्टका निरूप्यन्ते । प्रजापतिरथर्वा तत्पुरुष आथर्वणो दध्यङ्नाम सोऽग्निरेव तस्यास्थीनि इष्टका अभवन् । 'छन्दस्यपि दृश्यते' इत्यनङ् । अमुमेवार्थं मन्त्रलिङ्गेन समर्थयते—एतं ह वावेति । अमुमेवार्थं 'इन्द्रो दधीचः '* इति मन्त्रेण ऋषिर्वेदो ह्यनुवदति तस्मादिष्टकाभिश्चयनात्सात्माऽग्निश्चितो भवति आत्मीयावयवसहित इत्यर्थः । एवं वेदिता अमुष्मिन् लोके भोगस्थाने सात्मा अमृतो भवति ॥

---

*ब्रा. १-५-८.

द शरीरं वा एतदग्नेर्यच्चित्यं आत्मा
वैश्वानरो यच्चिते वैश्वानरं जुहोति श-
रीरमेव सꣳस्कृत्यं ॥२५॥ अभ्यारो-
हति शरीरं वा एतद्यजमानस्सꣳस्कु-
रुते यदग्निं चिनुते यच्चिते वैश्वानरं
जुहोति शरीरमेव सꣳस्कृत्यात्मना-
ऽभ्यारोहति तस्मात्तस्य नावं द्यन्ति

एवम् । वेद । [8]शरीरम् । वै । एतत् । अग्नेः । यत् । चित्यः । आत्मा । वैश्वानरः । यत् । चिते । वैश्वानरम् । जुहोति । शरीरम् । एव । सꣳस्कृत्यं ॥२५॥ अभ्यारोहतीत्यभि–आरोहति । शरीरम् । वै । एतत् । यजमानः । समिति । कुरुते । यत् । अग्निम् । चिनुते । [9]यत् । चिते । वैश्वानरम् । जुहोति । शरीरम् । एव । सꣳस्कृत्यं । आत्मना । अभ्यारोहतीत्यभि–आरोहति । तस्मात् । तस्यं । न । अवेति । द्यन्ति । जीवन्न् । एव । देवान् । अपीति । एति ।

[8]शरीरं वा इत्यादि ॥ वैश्वानरहोमविधिः । चित्यश्चेतव्योऽग्नेः शरीरम् । यत्र यो वैश्वानरं द्वादशकपालम् ॥

[9]यदित्यादि ॥ यजमानशरीरत्वेन रूपणं वैश्वानरस्यावदानप्रति-

जीवन्नेव देवानप्येति वैश्वानर्यर्चा
पुरीषमुप दधातीयं वा अग्निर्वैश्वान-
रस्तस्यैषा चितिर्यत्पुरीषमग्निमेव वै-
श्वानरं चिनुत एषा वा अग्नेः प्रिया
तनूर्यद्वैश्वानरः प्रियामेवास्य तनुव-
मव रुन्धे ॥ २६ ॥

[10]वैश्वानर्या । ऋचा । पुरीषम् । उपेति । दधाति । इयम् । वै । अग्निः । वैश्वानरः । तस्य । एषा । चितिः । यत् । पुरीषम् । अग्निम् । एव । वैश्वानरम् । चिनुते । एषा । वै । अग्नेः । प्रिया । तनूः । यत् । वैश्वानरः । प्रियाम् । एव । अस्य । तनुवम् । अवेति । रुन्धे ॥ २६ ॥

अग्निष्टत्सꣳस्कृत्याग्नेर्दश च ॥ ६ ॥

षेधार्थम् । आत्मना स्वयमारोहति । तस्मादात्मशरीरस्य अवदानं न युज्यते । जीवन्नेव च देवान्गच्छति ॥

[10]वैश्वानर्यर्चेति ॥ 'पृष्टो दिवि'* इत्येतया । इयं वा इत्यादि पुरीषोपधानस्तुतिः गता ॥

इति पञ्चमे षष्ठे षष्ठोनुवाकः.

*सं. १-५-११.

अग्नेर्वै दीक्षयां देवा विराजंमाप्नु-
वन्तिस्रो रात्रीर्दीक्षितस्स्यात्त्रिपदां
विराड्विराजंमाप्नोति षड्रात्रीर्दीक्षित-
स्स्याथ्षड्वा ऋतवंस्संवथ्सरस्संव-
थ्सरो विराड्विराजंमाप्नोति दश रा-
त्रीर्दीक्षितस्स्याद्दशांक्षरा विराड्विरा-

[1]अग्नेः । वै । दीक्षयां । देवाः । विराजमितिं वि-राजंम् । आप्नुवन्न् । तिस्रः । रात्रीः । दीक्षितः । स्यात् । त्रिपदेतिं त्रि-पदां । विराडितिं वि-राट् । विराजमितिं वि-राजंम् । आप्नोति । [2]षड् । रात्रीः । दीक्षितः । स्यात् । षट् । वै । ऋतवंः । संवत्सर इतिं सं-वत्सरः । संवत्सर इतिं सं-वत्सरः । विराडितिं वि-राट् । विराजमितिं वि-राजंम् । आप्नोति । [3]दशं । रात्रीः । दीक्षितः । स्यात् । द-

[1]अग्नेर्वै दीक्षयेत्यादि ॥ त्रिरात्रादिदीक्षाविधिः । दीक्षा मौ-ञ्ज्यादिलक्षणा । 'तिस्रादेशस्य 'उदात्तयणः' इति शस उदात्तत्वम् । त्रिभिर्दशकैर्विराडिति दशकाः पादाः ॥

[2]षड्वा इति ॥ षट्त्वान्वयात् षड्त्ववयवसंवत्सरात्मकविराड्लाभः । एवं सर्वत्र ॥

[3]दशाक्षरेति ॥ दशाक्षरपदा ॥

जंमाप्नोति द्वादंश रात्रींर्दीक्षितस्स्या-
द्द्वादंश मासांस्संवथ्सरस्संवथ्सरो वि-
राड्विराजंमाप्नोति त्रयोंदश रात्रींर्दी-
क्षितस्स्यात्त्रयोंदश ॥२७॥ मासां-
स्संवथ्सरस्संवथ्सरो विराड्विराजं-

शांक्षरेति दशं-अक्षरा । विराडिति वि-राट् । वि-
राजमिति वि-राजंम् । आप्नोति । [4]द्वादंश । रा-
त्रीः । दीक्षितः । स्यात् । द्वादंश । मासांः । सं-
वत्सर इति सं-वत्सरः । संवत्सर इति सं-वत्स-
रः । विराडिति वि-राट् । विराजमिति वि-रा-
जंम् । आप्नोति । [5]त्रयोंदशेति त्रयंः-दश । रा-
त्रीः । दीक्षितः । स्यात् । त्रयोंदशेतित्रयंः-दश ॥
२७॥ मासांः । संवत्सर इति सं-वत्सरः । संव-
त्सर इति सं-वत्सरः । विराडिति वि-राट् । वि-

[4]द्वादशेति सौराः मासाः ॥ द्वौ च दश च द्वादश । ‘सङ्ख्या’ इति पूर्वपदप्रकृतिस्वरत्वम् । एवं सर्वत्र ॥

[5]त्रयोदश मासा इति ॥ अधिकमासेन त्रयोदशचान्द्रमासाः । सौरचान्द्रान्तराळमधिकमारभते । यथोक्तम्—

अधिमासका युगे तैरधिमासेभ्योधिकास्तु ये चान्द्राः । इति ॥

माप्नोति पञ्चदश रात्रीर्दीक्षितस्स्या-
त्पञ्चदश वा अर्धमासस्य रात्रयोऽ-
र्धमासशस्संवथ्सर आप्यते संवथ्स-
रो विराड्विराजमाप्नोति सप्तदश रा-
त्रीर्दीक्षितस्स्याद्द्वादश मासाः पञ्चर्त-

राजमिति वि-राजम् । आप्नोति । [6]पञ्चदशेति प-ञ्च-दश । रात्रीः । दीक्षितः । स्यात् । पञ्चदशेति पञ्च-दश । वै । अर्धमासस्येत्यर्ध-मासस्य । रात्रयः । अर्धमासश इत्यर्धमास-शः । संवत्सर इति सं-वत्सरः । आप्यते । संवत्सर इति सं-वत्सरः । विराडिति वि-राट् । विराजमिति वि-राजम् । आप्नोति । [7]सप्तदशेति सप्त-दश । रात्रीः । दीक्षितः । स्यात् । द्वादश । मासाः । पञ्च । ऋतवः ।

[6]पञ्चदशेति ॥ सावनस्य मासस्य । यथाऽऽहुः—'त्रिंशद्गुणकरोदयः सावनः' इति । अर्धमासश इति । अर्धमासेनार्धमासेन । 'संख्यैकवचनाच्च' इति शस् ॥

[7]पञ्चर्तव इति ॥ हेमन्तशिशिरयोरेकत्वात् । दृष्टं हि सहानुमन्त्रणं 'हेमन्तशिशिरावृतूनां प्रीणामि'* इति । संवत्सर इति । सप्तदशसंख्यान्वयात् ॥

*सं. १-६-२.

व॒त्स॒र सं॑वथ्स॒रस्सं॑वथ्स॒रो वि॒राड्वि॒रा-
जं॑माप्नोति॒ चतु॑र्विꣳशति॒ꣳ रात्री॑-
र्दी॑क्षि॒तस्स्या॒च्चतु॑र्विꣳशतिरर्धमा॒सा
स्सं॑वथ्स॒रस्सं॑वथ्स॒रो वि॒राड्वि॒राजं॑
माप्नोति त्रि॒ꣳश॒तꣳ रात्री॑र्दी॑क्षि॒त-
स्स्या॑त् ॥२८॥ त्रि॒ꣳशद॑क्षरा वि॒रा-

सः । सं॒व॒त्स॒र इति॑ सं–व॒त्स॒रः । सं॒व॒त्स॒र इति॑ सं–व॒-
त्स॒रः । वि॒राडिति॑ वि–राट् । वि॒राज॒मिति॑ वि–राजं॑म् ।
आ॒प्नोति॒ । [8]चतु॑र्विꣳशति॒मिति॒ चतुः–वि॒ꣳश॒ति॒म् ।
रात्रीः॑ । दी॒क्षि॒तः । स्या॒त् । चतु॑र्विꣳशति॒रिति॒
चतुः॑–वि॒ꣳश॒ति॒ः । अ॒र्ध॒मा॒सा इत्य॑र्ध–मा॒साः ।
सं॒व॒त्स॒र इति॑ सं–व॒त्स॒रः । सं॒व॒त्स॒र इति॑ सं–व॒-
त्स॒रः । वि॒राडिति॑ वि–राट् । वि॒राज॒मिति॑ वि–
राजं॑म् । आ॒प्नोति॒ । [9]त्रि॒ꣳश॒तं॑म् । रात्रीः॑ । दी॒क्षि॒-
तः । स्या॒त् ॥ २८ ॥ त्रि॒ꣳशद॑क्षरेति॑ त्रि॒ꣳशत्–
अ॒क्ष॒रा । वि॒राडिति॑ वि–राट् । वि॒राज॒मिति॑ वि–

[8]चतुर्विंशतिमिति ॥ चान्द्रास्सांशाः, अन्ये निरंशाः ॥

[9]त्रिंशतं रात्रीरिति ॥ सावनसम्बन्धिनीः ॥

ड्विराजंमाप्नोति मासं दीक्षितस्स्या-
द्यो मासस्स संवथ्सरस्संवथ्सरो वि-
राड्विराजंमाप्नोति चतुरो मासो दी-
क्षितस्स्याच्चतुरो वा एतं मासो व-
संवोऽबिभरुस्ते पृथिवीमाऽजयन्गा-
यत्रीं छन्दोऽष्टौ रुद्रास्तेऽन्तरिक्षमाऽ-

राजंम् । आप्नोति । [10]मासंम् । दीक्षितः । स्यात् । यः । मासः । सः । संवत्सर इति सं—वत्सरः । संवत्सर इति सं—वत्सरः । विराडिति वि—राट् । विराजमिति वि—राजंम् । आप्नोति । [11]चतुरः । मासः । दीक्षितः । स्यात् । चतुरः । वै । एतम् । मासः । वसंवः । अबिभरुः । ते । पृथिवीम् । एतिं । अजयन् । गायत्रीम् । छन्दः । अष्टौ । रुद्राः । ते । अन्तरिक्षम् । एतिं । अजयन् । त्रिष्टुभंम् ।

[10]मासमिति ॥ सौरश्चान्द्र आर्क्षो वा गृह्यते । सर्वेऽप्येते क्षयवृद्धियोगान्नैकान्ततः त्रिंशद्दिवसाः । तत्र सौरस्संक्रमात् संक्रमः, चान्द्रः दर्शाद्दर्शः, आर्क्षश्चन्द्रस्यर्क्षेण योगः । यो मास इति । अवयवावयविनोरनत्यन्तभेदात् ॥

[11]चतुरो वा इत्यादि ॥ एतमुख्यं चतुरो मासो वसवो धारयन् । तेन पृथिवीं गायत्रीं च ते आभिमुख्येनाजयन् । अष्टौ रुद्रा

जंयन्त्रिष्टुभं छन्दो द्वादशादित्यास्ते
दिवमाऽजंयञ्जगंतीं छन्दस्ततो वै ते
व्यावृतंमगच्छञ्छ्रैष्ठ्यं देवानां तस्मा-
द्वादंश मासो भूत्वाऽग्निं चिन्वीत द्वादं-
श मासांस्संवथ्सरस्संवथ्सरोऽग्निश्चि-
त्यस्तस्यांहोरात्राणीष्टंका आप्तेष्टंक-

छन्दंः । द्वादंश । आदित्याः । ते । दिवंम् । एतिं
अजयन् । जगंतीम् । छन्दंः । ततंः । वै । ते ।
व्यावृतमितिं वि-आवृतंम् । अगच्छन् । श्रैष्ठ्यंम् ।
देवानांम् । [12]तस्मांत् । द्वादंश । मासंः । भूत्वा ।
अग्निम् । चिन्वीत । द्वादंश । मासाः । संवत्सर
इतिं सं-वत्सरः । संवत्सर इतिं सं-वत्सरः । अ-
ग्निः । चित्यंः । तस्यं । अहोरात्राणीत्यंहः-रात्रा-
णिं । इष्टंकाः । आप्तेष्टंकमित्याप्त-इष्टकम् । ए-

---

इति । अष्टौ मासः रुद्रा अबिभरुः । द्वादशादित्या इति । द्वा-
दश मास आदित्या अबिभरुः । ततस्ते वसुरुद्रादित्या व्यावृतं
व्यावृत्तिं देवान्तरेभ्योऽगच्छन् श्रैष्ठ्यं प्रशस्ततां च ॥

[12]तस्मादिति विधिः ॥ तस्येति संवत्सरस्य आत्मनश्चित्यस्य
अग्नेः अहोरात्रस्थानीया इष्टकाः । तस्मात्संवत्सरभरणेन आप्तेष्टक-

मेनं चिनुतेऽथो व्यावृतमेव गच्छति
श्रैष्ठ्यꣳ समानानाम् ॥ २१ ॥
सुवर्गाय वा एष लोकाय चीयते
यदग्निस्तं यन्नान्वारोहेत्सुवर्गाल्लोका-

नम् । चिनुते । अथो इति । व्यावृतमिति वि-आवृतम् । एव । गच्छति । श्रैष्ठ्यम् । समानानाम् ॥ २१ ॥

स्यात्त्रयोदश त्रिꣳशतꣳरात्रीर्दीक्षितस्स्या-
द्वे तेऽष्टाविꣳशतिश्च ॥ ७ ॥

[1]सुवर्गायेति सुवः-गाय । वै । एषः । लोकाय । चीयते । यत् । अग्निः । तम् । यत् । न । अन्वारोहेदित्यनु-आरोहेत् । सुवर्गादिति सुवः-गात् ।

मेनं चिनुते आप्ताः पौष्कल्येन बद्धा इष्टका अस्येति । अथो इत्यादि । गतम् ॥

इति पञ्चमे षष्ठे सप्तमोनुवाकः.

[1]सुवर्गायेत्यादिरन्वारोहणविधिः ॥ 'पृथिवीमाक्रमिषं' इत्यादिना अन्वारोहाख्येन मन्त्रेण पृथिव्यादिक्रमेण अन्वारोहणं सुवर्गावाप्त्यै भवति ॥

यजमानो हीयेत पृथिवीमाऽक्रमि-
षं प्राणो मा मा हासीदन्तरिक्षमाऽ-
क्रमिषं प्रजा मा मा हासीद्दिवमाऽ-
क्रमिषꣳ सुवरगन्मेत्याहैष वा अग्ने-
रन्वारोहस्तेनैवैनमन्वारोहति सुव-
र्गस्य लोकस्य समष्ट्यै यत्पक्षसं-

लोकात् । यजमानः । हीयेत । पृथिवीम् । एति । अक्रमिषम् । प्राण इति प्र-अनः । मा । मा । हासीत् । अन्तरिक्षम् । एति । अक्रमिषम् । प्रजेति प्र-जा । मा । मा । हासीत् । दिवम् । एति । अक्रमिषम् । सुवः । अगन्म । इति । आह । एषः । वै । अग्नेः । अन्वारोह इत्यनु-आरोहः । तेन । एव । एनम् । अन्वारोहतीत्यनु-आरोहति । सुवर्गस्येति सुवः-गस्य । लोकस्य । समष्ट्या इति सं-अष्ट्यै ।

[2]मन्त्रार्थस्तु—पृथिवीं सर्वामनेन चित्यारोहणेनाक्रमिषं आक्रान्तवानस्मि । 'नेटि' इति वृद्धिप्रतिषेधः । तेन प्राणो मा मा हासीत् मा त्याक्षीत् । एवमुत्तरे द्रष्टव्ये । गमेः 'अस्मदो द्वयोश्च' इत्येकस्मिन् बहुवचनम् । यद्वा—अनेनाक्रमणेन सपुत्रपौत्रा वयं स्वर्गं गमिष्याम इति । छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुक् ॥

मितां मिनुयात् ॥ ३० ॥ कनीयाꣳसं यज्ञक्रतुमुपेयात्पापीयस्यस्यात्मनः प्रजा स्याद्वेदिसंमितां मिनोति ज्यायाꣳसमेव यज्ञक्रतुमुपैति नास्या-

यत् । पक्षसंम्मितामिति पक्ष-सम्मिताम् । मिनुयात् ॥ ३० ॥ कनीयाꣳसम् । यज्ञक्रतुमिति यज्ञ-क्रतुम् । उपेति । इयात् । पापीयसी । अस्य । आत्मनः । प्रजेति प्र-जा । स्यात् । वेदिसम्मितामिति वेदि-सम्मिताम् । मिनोति । ज्यायाꣳसम् । एव । यज्ञक्रतुमिति यज्ञ-क्रतुम् । उपेति । एति । न । अस्य । आत्मनः । पापीयसी । प्रजेति प्र-जा । भवति । साहस्रम् । चिन्वीत । प्रथ-

'यत्पक्षसम्मितामिति ॥ एकयूपो वैकादशिनो वा कर्तव्येति तत्रैकादशिन्यां विशेष उच्यते—यदि पक्षसम्मितां पक्षोच्छ्रायामेकादशिनीं मिनुयात् प्रक्षिपेत् स्थापयेत् । डुमिञ् प्रक्षेपणे । कनीयांसमल्पतरमेव यज्ञक्रतुमुपेयात्, न ज्यायांसम् । किञ्च—अस्य यजमानस्य आत्मीया प्रजा पापीयसी पापतरा स्यात् तस्माद्वेदिसम्मितां मिनोतीति विधिः । ज्यायांसमेवेत्यादिना उक्तदोषाभावमाचष्टे ॥

'साहस्रमिति ॥ साहस्रमिष्टकानां परिमाणं अस्येति 'शतमानविंशतिक' इत्यण् । साहस्रमग्निं चिन्वा प्रथमं चिन्वानः ।

त्मनः पापीयसी प्रजा भवति सा-
हस्रं चिन्वीत प्रथमं चिन्वानस्सह-
स्रसंमितो वा अयं लोक इममेव
लोकमभि जयति द्विषाहस्रं चि-
न्वीत द्वितीयं चिन्वानो द्विषाहस्रं
वा अन्तरिक्षमन्तरिक्षमेवाभि जयति

मम् । चिन्वानः । सहस्रसम्मित इति सहस्र–स-
म्मितः । वै । अयम् । लोकः । इमम् । एव । लोकम् ।
अभीति । जयति । द्विषाहस्रमिति द्वि–साहस्रम् ।
चिन्वीत । द्वितीयम् । चिन्वानः । द्विषाहस्रमिति
द्वि–साहस्रम् । वै । अन्तरिक्षम् । अन्तरिक्षम् ।

सहस्रसम्मित इति प्राथम्यसाम्यात् सहस्रेण तुल्यम् । उपमान-पूर्वपदप्रकृतिस्वरत्वम् । यथा सहस्रेण सम्यग्झर्वर्तिलः प्रशस्ततर इत्यर्थः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

द्विषासहस्रमिति ॥ द्वे सहस्रे परिमाणमस्य प्राग्वत् 'संख्या-पूर्वपदानां तदन्तग्रहणमलुकि' इति शतमानादिना अण्, 'अ-ध्यर्धपूर्वाद्द्विगोः' इति प्राप्तस्य लुको 'विभाषा कार्षापणसहस्रा-भ्याम्' इति अभावः, 'संख्यायास्संवत्सरसंख्यस्य च' इति उत्तर-पदवृद्धिः, सुषामादित्वात् षत्वम्, 'द्विगौ प्रमाणे' इति पूर्वपद-प्रकृतिस्वरत्वम् । द्विषाहस्रं वा अन्तरिक्षमिति । मध्यमत्वेन द्विषाह-

त्रिषाहस्रं चिन्वीत तृतीयं चिन्वानः ॥ ३१ ॥ त्रिषाहस्रो वा असौ लोकोऽमुमेव लोकमभि जयति जानुदघ्नं चिन्वीत प्रथमं चिन्वानो गायत्रियैवेमं लोकमभ्यारोहति नाभिदघ्नं चिन्वीत द्वितीयं चिन्वान-

एव । अभीति । जयति । [6]त्रिषाहस्रमिति त्रि-साहस्रम् । चिन्वीत । तृतीयम् । चिन्वानः ॥३१॥ त्रिषाहस्र इति त्रि-साहस्रः । वै । असौ । लोकः। अमुम् । एव । लोकम् । अभीति । जयति । [7]जानुदघ्नमिति जानु-दघ्नम् । चिन्वीत । प्रथमम् । चिन्वानः । गायत्रिया । एव । इमम् । लोकम् । अभ्यारोहतीत्यभि-आरोहति । नाभिदघ्नमिति नाभि-दघ्नम् । चिन्वीत । द्वितीयम् । चिन्वानः । त्रिष्टुभा । एव । अन्तरिक्षम् । अभ्यारोहतीत्यभि-

स्राग्निसाधर्म्यात् ताच्छब्द्यम् । मनुष्यलोकाद्वा सहस्रसम्मितात् प्रशस्ततरत्वं ख्यापयितुं द्विषाहस्रमित्युक्तम् ॥

[6]त्रिषाहस्रमित्यादि ॥

[7]जानुदघ्नमित्यादि ॥ 'प्रमाणे द्वयसच्' इति दघ्नच् । गायत्र्यादीनां प्राथम्यादिभिः जानुदघ्नाद्यानुरूप्यम् ॥

त्रिष्टुभैवान्तरिक्षमभ्यारोहति ग्रीव-
दघ्नं चिन्वीत तृतीयं चिन्वानो ज-
गत्यैवामुं लोकमभ्यारोहति नाग्निं
चित्वा रामामुपेयादयोनौ रेतो धा-
स्यामीति न द्वितीयं चित्वाऽन्यस्य
स्त्रियम् ॥ ३२ ॥ उपेयान्न तृतीयं

आरोहति । [8]ग्रीवदघ्नमिति ग्रीव-दघ्नम् । चिन्वीत। तृतीयम् । चिन्वानः । जगत्या । एव । अमुम् । लोकम् । अभ्यारोहतीत्यभि-आरोहति । [9]न । अग्निम् । चित्वा । रामाम् । उपेति । इयात् । अयोनौ । रेतः । धास्यामि । इति । न । द्वितीयम् । चित्वा । अन्यस्य । स्त्रियम् ॥ ३२ ॥ उपेति । इयात् । न । तृतीयम् । चित्वा । काम् । चन । उ-

[8]ग्रीवदघ्नमिति ॥ 'ङ्यापोस्संज्ञाच्छन्दसोः' इति ह्रस्वत्वम् ॥

[9]नाग्निं चित्वेति ॥ रत्यर्थां रामां अप्रजार्थं प्रथममग्निं चित्वा तां नोपेयात् । द्वितीयाद्यभिगम्य गमननिषेधहेतुमाह—अयोनाविति । अयोग्यायां योनौ रेतो धास्यामि वृथा स्थापयामि यद्युपेयामित्यनेन अभिप्रायेण रामां नोपेयात् । न द्वितीयमिति । अन्यस्य क्षत्रियादेः स्त्रियं नोपेयात् । प्रथमागमनेऽप्यसवर्णा निषिध्यते । न तृतीयमिति । प्रथमाभिगमन एव सवर्णाया अपि निषेधः ।

चित्वा कां चनोपेयाद्रेतो वा एतं
नि धत्ते यदग्निं चिनुते यदुपेयाद्रेत-
सा व्यृध्येताथो खल्वाहुरप्रजस्यं त-
द्यन्नोपेयादिति यद्रेतस्सिचावुपद-

पेति । इयात् । रेतः । वै । एतत् । नीति । धत्ते । यत् । अग्निम् । चिनुते । यत् । उपेयादित्युप–इयात् । रेतसा । वीति । ऋध्येत । अथो इति । खलु । आहुः । अप्रजस्यमित्यप्र–जस्यम् । तत् । यत् । न । उपेयादित्युप–इयात् । इति । यत् । रेतस्सिचाविति रेतः–सिचौ । उपदधातीत्युप–द-

प्रार्थिनीमपि नोपेयात् सवर्णामपि । सर्वेष्वपि पक्षेषु हेयमाह— रेतो वा इति । अग्निं चिन्वानो हि रेतसो निधानं करोति । स यद्युपेयात्, स्त्रियं रेतसा व्यृद्धस्स्यात् हतरेतस्कस्य तस्य न युज्यते कथं रेतो धातुमारब्धो व्ययमस्य कुर्यात्, तस्मान्नोपेयादिति ॥

10अथैतद्दूषयति—अथो खल्वाहुरिति ॥ न विद्यते प्रजाऽस्येति अप्रजाः । 'नित्यमसिच्प्रजामेधयोः' इत्यसिच् । अप्रजसमर्हतीत्यप्रजस्यम् । 'छन्दसि च' इति यप्रत्ययः । यदुक्तं तन्नोपेयादिति तदप्रजस्यं प्रजाविच्छेदहेतुः ; तस्मादुपेयादिति । तृतीयां चितवतः सवर्णां प्रति प्रतिप्रसवः आनन्तर्यादित्येके । रामाभिगमन एव निषेधे हेतुत्वाभिधानात् । तस्मादुपेयादेव । (विप्रसृजदेवाढं) रेतसोऽस्कन्दाय अशोषाय इतरथा शुष्करेता अप्रजाः स्यादिति

धाति ते एव यजमानस्य रेतो
बिभृतस्तस्मादुपेयाद्रेतसोऽस्कन्दाय
त्रीणि वाव रेताꣳसि पिता पुत्रः
पौत्रः ॥ ३३ ॥ यद्वे रेतस्सिचावुपद-
ध्याद्रेतोऽस्य विच्छिन्द्यात्तिस्र उप

धाति । ते इति । एव । यजमानस्य । रेतः । बि-भृतः । तस्मात् । उपेति । इयात् । रेतसः । अ-स्कन्दाय । [11]त्रीणि । वाव । रेताꣳसि । पिता । पुत्रः । पौत्रः ॥ ३३ ॥ यत् । द्वे इति । रेतस्सि-चाविति रेतः—सिचौ । उपदध्यादित्युप—दध्यात् । रेतः । अस्य । वीति । छिन्द्यात् । तिस्रः । उपेति । दधाति । रेतसः । संतत्या इति सं—तत्यै ।

अपरा योजना । ते एव रेतस्सिचौ यत्र क्वाप्युत्सृष्टं रेतो बिभ्रतः परिगृह्णीतः, तस्मादुपेयादेव स्वयम् । एवमपि रेतसोस्कन्दाय अविनाशाय भवत्येवोपगमनमिति ॥

[11]त्रीणि वावेत्यादि ॥ त्रित्वविधिः । त्रीणि रेतांसि पित्रादिनामानि एकमेव रेत इत्थं त्रिधा भिन्नमिति । तत्र द्वयोःरेतस्सिचोरुपधाने एकविषयं यजमानस्य रेतो विच्छिन्द्यात् नश्येत् । तस्मात्तिस्र उपधेया इति । रेतसोऽविच्छेदाय भवत्येवं क्रियमाणमिति ॥

दधाति रेतस्संतत्या इयं वाव प्रं-
थमा रेतस्सिग्वाग्वा इयं तस्मात्प-
श्यंन्तीमां पश्यंन्ति वाचं वदंन्ती-
मन्तरिंक्षं द्वितीयां प्राणो वा अन्त-
रिंक्षं तस्मान्नान्तरिंक्षं पश्यंन्ति न
प्राणमसौ तृतीया चक्षुर्वा असौ त-

[12] इयम् । वाव । प्रथमा । रेतस्सिगिति रेतः—सिक् । वाक् । वै । इयम् । तस्मात् । पश्यंन्ति । इमाम् । पश्यंन्ति । वाचम् । वदंन्तीम् । अन्तरिंक्षम् । द्वितीया । प्राण इति प्र—अनः । वै । अन्तरिंक्षम् । तस्मात् । न । अन्तरिंक्षम् । पश्यंन्ति । न । प्राणमिति प्र—अनम् । असौ । तृतीया । चक्षुः । वै । असौ । तस्मात् । पश्यंन्ति । अमूम् । पश्यंन्ति ।

[12] इयं वावेत्यादि ॥ रेतस्सिचां स्तुतिः । पृथिव्येव प्रथमा रेतस्स्यात्. प्राथम्यसामान्यात् । वागेव पृथिवी अधोभावसामान्यात् । इदानीं पृथिव्या वाक्च द्वयोस्समानधर्मतया समर्थयते— तस्मादिति । यस्माद्वागेव पृथिवी तस्मात्सर्वेऽपि पृथिवीं पश्यन्ति प्रत्यक्षेण गृह्णन्ति । वाचं वदन्तीं उच्चरन्तीं पश्यन्तीं शृण्वन्तीं प्रत्यक्षेणैव गृह्णन्ति । अन्तरिक्षं द्वितीयेति । मध्यमत्वसामान्यात् । प्राणो वा इत्यादि । मध्यमभावादेव नासिकावृत्तित्वात् । तस्मादिति । प्राणान्तरिक्षयोरप्यप्रत्यक्षमिति । असौ तृतीयेति । चरमभावित्व-

स्मात्पश्यंन्त्यमूं पश्यन्ति चक्षु र्यजुं-
षेमां च ॥ ३४ ॥ अमूं चोपं दधा-
ति मनंसा मध्यमामेषां लोकानां
क्लृप्त्या अथो प्राणानांमिष्टो यज्ञो
भृगुंभिराशीर्दा वसुंभिस्तस्यं त इ-

चक्षुंः । [13]यजुंषा । इमाम् । च ॥ ३४ ॥ अमूम् । च । उपेतिं । दधाति । मनंसा । मध्यमाम् । एषाम् । लोकानांम् । क्लृप्त्यै । अथो इतिं । प्राणानामितिं प्र-अनानांम् । [14]इष्टः । यज्ञः । भृगुंभिरिति भृगुं-भिः । आशीर्दा इत्याशीः-दाः । वसुंभिरिति वसुं-भिः । तस्यं । ते । इष्टस्यं । वीत-

सामान्यात् । चक्षुर्वा इत्युपरिभावसामान्यात् । तस्मादद्य चक्षुषोः प्रत्यक्षत्वमिति ॥

[13]यजुषेति "विराड् ज्योतिरधारयत्"* इति । नमसा मध्यमां एषां लोकानां क्लृप्त्यै आप्त्यै भवति । अथो अपि च प्राणानां च क्लृप्त्यै विधारणार्थं भवतीति स्तुतिः ॥

[14]स्तुतशस्त्रयोर्दोहं वाचयति—इष्टो यज्ञ इति ॥ एतस्य वचनेन स्तुतशस्त्रे दुहे दुग्धे फलानि स्तुतशस्त्रसाध्यानि । 'लोपस्त आत्मनेपदेषु' इति लोपः । मन्त्रार्थस्तु इष्टः सम्यक् निर्वर्तितः

*सं. ४-२-९.

ष्टस्य वीतस्य द्रविणेह भक्षीयेत्याह
स्तुतशस्त्रे एवैतेन दुहे पिता मा-
तरिश्वाऽच्छिद्रा पदा धा अच्छिद्रा
उशिजः पदाऽनु तक्षुस्सोमो विश्व-
विन्नेता नेषद्बृहस्पतिरुक्थामदानि

स्यं । द्रविणा । इह । भक्षीय । इति । आह ।
स्तुतशस्त्रे इति स्तुत–शस्त्रे । एव । एतेन । दुहे ।
15 पिता । मातरिश्वा । अच्छिद्रा । पदा । धाः । अ-
च्छिद्राः । उशिजः । पदा । अन्विति । तक्षुः ।
सोमः । विश्वविदिति विश्व–वित् । नेता । नेषत् ।
बृहस्पतिः । उक्थामदानीत्युक्थ–मदानि । शं-

भृगुभिः भृगुकुलैः ऋत्विग्भिः आशीर्दाः—आशिषां फलानां च दाता च कृतः वसुभिः । यद्वा—यो यज्ञे भृगुभिः वसुभिश्च इष्टः आशीर्दाः तस्य तादृशस्य इष्टस्य वीतस्य कान्तस्य आशिषः द्रविणा द्रविणानि इह भक्षय भजेय हे यज्ञ! अस्मदीय! ॥

[15]पिता मातरिश्वेत्यग्निमनुशंसति ॥ त्रिष्टुबेषा । एष मन्त्रोग्नेरुक्थ्यं शस्त्रं तेनैवैनमग्निमनुशंसति मन्त्रार्थस्तु—हे अग्ने! पिता मातरिश्वा अच्छिद्रा पदा अच्छिद्राणि पदानि भोगस्थानानि धाः । दधातेर्लेटि पुरुषव्यत्ययः, 'बहुलं छन्दसि' इति शपो लुक् । किञ्च—उशिजः कामनाः अर्थात् तान्यच्छिद्रपदानि अनुतक्षुः अनुक्रमेण संस्कुर्वन्तु । तक्षेश्शपो लोपः । अविनाशा वा उशिजः मन्त्र-

शꣳसिषदित्याहैतद्वा अग्नेरुक्थं ते-
नैवैनमनु शꣳसति ॥ ३५ ॥
सूयते वा एषोऽग्नीनां य उखायां
ध्रियते यदधस्सादयेद्गर्भाः प्रपादुका-

सिषत् । इति । आह । एतत् । वै । अग्नेः । उ-
क्थम् । तेन । एव । एनम् । अन्विति । शꣳसति ॥ ३५ ॥

मिनुयात्तृतीयं चिन्वानस्त्रियं पौत्रेश्च वै
सप्त च ॥ ८ ॥

[1]सूयते । वै । एषः । अग्नीनाम् । यः । उखा-
याम् । ध्रियते । यत् । अधः । सादयेत् । गर्भाः ।
प्रपादुका इति प्र–पादुकाः । स्युः । अथो इति ।

---

दशः ऋषयः तानि पदानि अनन्तरं संस्कुर्वन्तु । सोमश्च वि-
श्ववित् विश्ववेदी विश्वस्य च नेता नेषन् नयतु तानि पदानि ध्रु-
वाणि करोतु । बृहस्पतिः उक्थामदानि स्तोत्रशस्त्राणि शंसिषत्
शंसतु । उभयत्रापि 'सिब्बहुलं लेटि' इति सिप् . 'लेटोडाटौ'
इत्यडागमः ॥

इति पञ्चमे षष्ठे अष्टमोनुवाकः.

---

[1]सूयते वा एष इत्यादि ॥ अग्नीनां मध्ये अयं सूयते उत्प-
द्यते ईश्वरो वा क्रियते तदिदं यदधस्सादयेत् गर्भाः प्रजानां

स्स्युरथो यथा सवात्प्रत्यवरोहति
तादृगेव तदासन्दी सादयति गर्भा-
णां धृत्या अप्रपादायाथो सवमेवैनं
करोति गर्भो वा एष यदुख्यो यो-
निश्शिक्यं यच्छिक्यादुखां निरूहे-

यथा । सवात् । प्रत्यवरोहतीति प्रति–अवरोहति । तादृक् । एव । तत् । आसन्दी । सादयति । गर्भाणाम् । धृत्यै । अप्रपादायेत्यप्र–पादाय । अथो इति । सवम् । एव । एनम् । करोति । [2]गर्भः । वै । एषः । यत् । उख्यः । योनिः । शिक्यम् । यत् । शिक्यात् । उखाम् । निरूहेदिति निः–ऊ-

प्रपादुकाः प्रपतनशीलास्स्युः । अपि च यथा सवात् ऐश्वर्यात्प्रत्यवरोहति प्रच्यवते तादृगेव तत् ईश्वरस्याधस्सादनात् । तस्मात् आसन्दी आसन्द्यां सादयति । 'सुपां सुलुक्' इति सप्तम्या अलुक् । प्रगृह्यत्वं व्यत्ययेन प्रवर्तते । तृतीया वा लुप्यते, 'स्थाल्या भुङ्क्ष्व' इतिवत् साधनत्वस्य विवक्षितत्वात् । गर्भाणां रक्षणाय अप्रपतनाय च तद्भवति । अथो अपि च सवं यज्ञवन्तं एवैनं करोति । यद्वा—यजमानमेवेश्वरं करोति ॥

[2]गर्भो वा इत्यादि ॥ गतम् । निरूहणमपनयनं निरूहणमकाल एव गर्भस्य निर्गमनम् । तस्मान्न निरूहेदिति ॥

योनेर्गर्भं निरूहृंण्यात्षडुद्यामꣳ शि-
क्यं भवति षोढाविहितो वै ॥३६॥
पुरुष आत्मा च शिरश्च चत्वार्यङ्गा-
न्यात्मन्नेवैनं बिभर्ति प्रजापतिर्वा
एष यदग्निस्तस्योखा चोलूखलं च
स्तनौ तावस्य प्रजा उप जीवन्ति

हेत् । योनेः । गर्भम् । निरिति । हन्यात् । [3]षडु-
द्याममिति षट्-उद्यामम् । शिक्यम् । भवति ।
षोढाविहित इति षोढा-विहितः । वै ॥ ३६ ॥ पु-
रुषः । आत्मा । च । शिरः । च । चत्वारि । अ-
ङ्गानि । आत्मन्न् । एव । एनम् । बिभर्ति । [4]प्रजा-
पतिरिति प्रजा-पतिः । वै । एषः । यत् । अग्निः ।
तस्य । उखा । च । उलूखलम् । च । स्तनौ ।
तौ । अस्य । प्रजा इति प्र-जाः । उपेति । जी-

[3]षडुद्याममिति ॥ निरूहणानेषधविधिः । उद्यामाः पादाः । षोढाविहित इति षट्प्रकारो विहितः । 'षष उत्वम्' इति षत्वष्टुत्वे । आत्मा शरीरं कण्ठादयः उपरिशिरः चत्वार्यङ्गानि द्वौ हस्तौ द्वौ पादौ षट्त्वान्वयादात्मन्येष धृतो भवत्युख्यः । शिक्यादिनिरूहणेन । तस्मान्न निरूहेदिति ॥

[4]प्रजापतिर्वा इत्यादि ॥ उखोलूखलयोरुपधानविधिर्गतः । अ-

यदुखां चोलूखलं चोपदधाति ता-
भ्यामेव यजमानोऽमुष्मिंल्लोकेऽग्निं
दुहे संवथ्सरो वा एष यदग्निस्तस्यं
त्रेधाविहिता इष्टकाः प्राजापत्या वै-
ष्णवीः ॥ ३७ ॥ वैश्वकर्मणीरहो-
रात्राण्येवास्यं प्राजापत्या यदुख्यं

वन्ति । यत् । उखाम् । च । उलूखलम् । च । उपदधातीत्युप-दधाति । ताभ्याम् । एव । यजमानः । अमुष्मिन्न् । लोके । अग्निम् । दुहे । संवत्सर इति सं-वत्सरः । वै । एषः । यत् । अग्निः । तस्य । त्रेधाविहिता इति त्रेधा-विहिताः । इष्टकाः । प्राजापत्या इति प्राजा-पत्याः । वैष्णवीः ॥ ॥ ३७ ॥ वैश्वकर्मणीरिति वैश्व-कर्मणीः । अहोरात्राणीत्यहः-रात्राणि । एव । अस्य । प्राजाप-

भिमतसाधनयोर्बहुसाधनत्वात् । स्थानापेक्षं पुल्लिङ्गत्वम्, इतरथा नपुंसकस्य शेषप्रसङ्गात् ॥

'संवत्सरो वा' इत्यादि ॥ त्रेधाविहिताः प्राजापत्याः वैष्णव्यः वैश्वकर्मण्यः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । तत्राहोरात्राणि प्राजापत्या इष्टकाः, तेषां प्राजापत्यत्वात् । तत्र उख्यभरणेन ता उपहिता भवन्ति । तावत्कालोपासनमेव उपधानं

बिभर्ति प्राजापत्या एव तदुपं धत्ते यथ्समिधं आदधाति वैष्णवा वै वनस्पतंयो वैष्णवीरेव तदुपं धत्ते यदिष्टंकाभिरग्निं चिनोतीयं वै विश्वकंर्मा वैश्वकर्मणीरेव तदुपं धत्ते तस्मांदाहुस्त्रिवृदग्निरिति तं वा एतं

त्या इति प्राजा-पत्याः । यत् । उख्यंम् । बिभर्ति । प्राजापत्या इति प्राजा-पत्याः । एव । तत् । उपेति । धत्ते । यत् । समिध इति सं-इधः । आदधातीत्यां-दधांति । वैष्णवाः । वै । वनस्पतंयः । वैष्णवीः । एव । तत् । उपेति । धत्ते । यत् । इष्टंकाभिः । अग्निम् । चिनोति । इयम् । वै । विश्वकर्मेति विश्व-कर्मा । वैश्वकर्मणीरिति वैश्व-कर्मणीः । एव । तत् । उपेति । धत्ते । तस्मात् । आहुः । त्रिवृदिति त्रि-वृत् । अग्निः । इति ।

उपचर्यते । समिधामौदुम्बरीणामाधानेन वैष्णव्य इष्टका उपहिता भवन्ति, वनस्पतीनां वैष्णवत्वात् । इष्टकाभिः मृद्विकारभूताभिः चयनेन वैश्वकर्मण्य उपहिता भवन्ति, पृथिव्या विश्वकर्मत्वात् । तस्मात्त्रिवृत्त्रिवृतोऽग्निरिति ब्रह्मवादिन आहुः । 'त्रिचक्रादीनामन्तः' इत्युत्तरपदान्तोदात्तत्वम् ॥

यजमान एव चिन्वीत यदस्यान्य-
श्चिनुयाद्यत्तं दक्षिणाभिर्न राधयेद-
ग्निमस्य वृञ्जीत योऽस्याग्निं चिनुयात्तं
दक्षिणाभी राधयेदग्निमेव तथ्स्पृणो-
ति ॥ ३८ ॥

तम् । वै । एतम् । यजमानः । एव । चिन्वीत । यत् । अस्य । अन्यः । चिनुयात् । यत् । तम् । दक्षिणाभिः । न । राधयेत् । अग्निम् । अस्य । वृञ्जीत । यः । अस्य । अग्निम् । चिनुयात् । तम् । दक्षिणाभिः । राधयेत् । अग्निम् । एव । तत् । स्पृणोति ॥ ३८ ॥

षोढाविहितो वै वैष्णवीरन्यो विꣳशतिश्च ॥ ९ ॥

तं वा एतमिति ॥ चयनव्यापारं यजमान एव कुर्यात् अध्वर्युरेव मन्त्रान् ब्रूयादिति । अन्यकर्तृकत्वे दोषमाह—यदस्येति । यदन्यश्चिनुयात् तं यदि दक्षिणाभिः प्रभूताभिः न राधयेत् न तोषयेत् सोऽस्याग्निः अग्निफलानि वृञ्जीत हरेत् । तस्मान्नान्यश्चिनुयात् स्वयमेव चिन्वीतेति । योऽस्येति पक्षान्तरमनुज्ञायते । तस्मात् स्वयं वाऽन्यो वेति विकल्पः । यदा त्वन्यश्चिनोति तं दक्षिणाभिः प्रभूताभिः भृशं राधयेत् । अग्निमेव तेन स्पृणोति प्रीणयति । स्पृ प्रीतौ । अल्पदक्षिणात्वे चेतुरेव फलं स्यात् ॥

इति पञ्चमे षष्ठे नवमोऽनुवाकः ।

प्रजापतिरग्निमचिनुतर्तुभिस्संवथ्सरं
वसन्तेनैवास्य पूर्वार्धमचिनुत ग्री-
ष्मेण दक्षिणं पक्षं वर्षाभिः पुच्छꣳ
शरदोत्तरं पक्षꣳ हैमन्तेन मध्यं ब्र-
ह्मणा वा अस्य तत्पूर्वार्धमचिनुत
क्षत्रेण दक्षिणं पक्षं पशुभिः पुच्छं

[1]प्रजापतिरिति प्रजा-पतिः । अग्निम् । अचि-नुत । ऋतुभिरित्यृतु-भिः । संवत्सरमिति सं-वत्सरम् । वसन्तेन । एव । अस्य । पूर्वार्धमिति पूर्व-अर्धम् । अचिनुत । ग्रीष्मेण । दक्षिणम् । पक्षम् । वर्षाभिः । पुच्छम् । शरदा । उत्तरमित्युत्-तरम् । पक्षम् । हेमन्तेन । मध्यम् । [2]ब्रह्मणा । वै । अस्य । तत् । पूर्वार्धमिति पूर्व-अर्धम् । अचिनुत । क्षत्रेण । दक्षिणम् । पक्षम् । पशुभि-

---

[1]प्रजापतिरग्निमचिनुतेत्यादि ॥ संवत्सरमिति । सदृशप्रधानं यथा संवत्सरमृतुभिः सृष्टवानेवमग्निमपि ऋतुभिः वसन्तादिभिः अचिनुत । तत्प्रकारमाह—वसन्तेनैवेत्यादिना । तदृतुसमृद्धिप्रदत्वख्यापनाय स्तुतिरियम् ॥

[2]इदानीं वसन्तादीनां सर्वार्थसाधनत्वं ख्यापयितुं द्वितीया स्तुतिः—ब्रह्मणा वा अस्येत्यादि ॥ वसन्तादिप्रधानत्वात् ब्राह्मणा-

विशोत्तरं पक्षमाशया मध्यं य एवं विद्वानग्निं चिनुत ऋतुभिरेवैनं चिनुतेऽथो एतदेव सर्वमवं ॥३१॥ रुन्धे शृण्वन्त्येनमग्निं चिक्यानमत्त्यन्न रोचत इयं वाव प्रथमा चितिरोष-

रिति पशु-भिः । पुच्छम् । विशा । उत्तरमित्युत्-तरम् । पक्षम् । आशया । मध्यम् । यः । एवम् । विद्वान् । अग्निम् । चिनुते । ऋतुभिरित्यृतु-भिः । एव । एनम् । चिनुते । अथो इति । एतत् । एव । सर्वम् । अवेति ॥ ३१ ॥ रुन्धे । शृण्वन्ति । एनम् । अग्निम् । चिक्यानम् । अत्ति । अन्नम् । रोचते । [3]इयम् । वाव । प्रथमा । चितिः । ओषधयः ।

दीनां ब्राह्मणादिभिरेव अग्निश्रितो भवतीति प्रतिपादयति । आशा दिक्, बुद्धिर्वा तत्स्वभावा गृह्यन्ते । एवं विदित्वा चयने ऋतुभिरेव चितो भवति । अपि च एतत्सर्वं ब्राह्मणादिकमवरुन्धे विधेयीकरोति । ततश्शृण्वन्त्येनं अग्निं चितवन्तं अग्निश्रितोनेन महानुभावेनेति सर्वत्र ख्यातो भवति । पापेनापि ख्यातो भवति, यथा ग्रामो दग्धोनेन जाल्मेनेति; तत्राह—अन्नमत्त्यधिकं अस्यातिशयात् । किञ्च प्रजाभ्यो रोचते तेजस्व्येव भवति सर्वदा । समानवाक्ये पदात्परत्वान्निघाताभावः ॥

[3]इयं वावेत्यादि ॥ पृथिव्यादिरूपेण प्रथमादीनां चितीनां

धयो वनस्पतयः पुरीषमन्तरिक्षं द्वि-
तीया वयाꣳसि पुरीषमसौ तृतीया
नक्षत्राणि पुरीषं यज्ञश्चतुर्थी दक्षि-
णा पुरीषं यजमानः पञ्चमी प्रजा
पुरीषं यत्त्रिचितीकं चिन्वीत यज्ञं
दक्षिणामात्मानं प्रजामन्तरियात्त-
स्मात्पञ्चचितीकश्चेतव्य एतदेव स-

वनस्पतयः । पुरीषम् । अन्तरिक्षम् । द्वितीया ।
वयाꣳसि । पुरीषम् । असौ । तृतीया । नक्षत्राणि ।
पुरीषम् । यज्ञः । चतुर्थी । दक्षिणा । पुरीषम् ।
यजमानः । पञ्चमी । प्रजेति प्र–जा । पुरीषम् ।
यत् । त्रिचितीकमिति त्रि–चितीकम् । चिन्वीत ।
यज्ञम् । दक्षिणाम् । आत्मानम् । प्रजामिति प्र–
जाम् । अन्तः । इयात् । तस्मात् । पञ्चचितीक
इति पञ्च–चितीकः । चेतव्यः । एतत् । एव ।

चितिः ओषधिवनस्पत्यादिरूपेण च पुरीषाणाम् । यस्मादेवं तस्मात् यदिति । त्रिचितीकं चिन्वीत चतुर्थपञ्चमचित्यभावे तन्निमित्तं यज्ञं दक्षिणामात्मानं प्रजां चान्तरियात् विनाशयेत् । तस्मात्पञ्चचितीकश्चेतव्य इति । 'चितेः कपि' इति दीर्घत्वम् । पञ्चचितिकत्वे एतत् सर्वौषध्यादिकं यज्ञादिकं च स्पृणोति प्रीणयति रक्षतीत्यर्थः ॥

र्वꣳ स्पृणोति यत्तिस्रश्चितयः॥४०॥
त्रिवृद्ध्यग्निर्यद्द्वे द्विपाद्यजमानः प्रति-
ष्ठित्यै पञ्च चितयो भवन्ति पाङ्क्तः
पुरुष आत्मानमेव स्पृणोति पञ्च
चितयो भवन्ति पञ्चभिः पुरीषैरभ्यू-
हति दश सं पद्यन्ते दशाक्षरो वै
पुरुषो यावानेव पुरुषस्तꣳ स्पृणो-

सर्वम् ।[4] स्पृणोति । यत् । तिस्रः । चितयः॥४०॥
त्रिवृदिति त्रि-वृत् । हि । अग्निः । यत् । द्वे इति ।
द्विपादिति द्वि-पात् । यजमानः । प्रतिष्ठित्या इति
प्रति-स्थित्यै ।[5] पञ्च । चितयः । भवन्ति । पाङ्क्तः ।
पुरुषः । आत्मानम् । एव । स्पृणोति । पञ्च । चि-
तयः । भवन्ति । पञ्चभिरिति पञ्च-भिः । पुरीषैः ।
अभीति । ऊहति । दश । समिति । पद्यन्ते । द-
शाक्षर इति दश-अक्षरः । वै । पुरुषः । यावान् ।
एव । पुरुषः । तम् । स्पृणोति । अथो इति । दशाक्षरे-

[4]यत्तिस्र इति ॥ द्वित्वत्रित्वान्वयेनावयुत्य स्तुतिः । पञ्चेति । समुदायस्तुतिः । पङ्क्तिप्रभवः पाङ्क्तत्वादिति । पञ्चप्रभवत्वाद्वा । पङ्क्तिशब्द उत्पादिः ॥

[5]पञ्च चितय इत्यादिना दशत्वं संपाद्य स्तौति । पुरीषैरभ्यूहनमुपरिच्छादनम् । दशाक्षर इति । अक्षराणां आत्मनो नव प्राणा

त्यथो दशाक्षरा विराडन्नं विराड्विरा-
ज्येवान्नाद्ये प्रति तिष्ठति संवथ्सरो
वै षष्ठी चितिर् ऋतवः पुरीषꣳ ष-
ड्चितयो भवन्ति षट्पुरीषाणि द्वादश
सं पद्यन्ते द्वादश मासास्संवथ्सर-
स्संवथ्सर एव प्रति तिष्ठति ॥४१॥

ति दश–अक्षरा । विराडिति वि–राट् । अन्नम् । विराडिति वि–राट् । विराजीति वि–राजि । एव । अन्नाद्य इत्यन्न–अद्ये । प्रतीति । तिष्ठति । 6संवत्सर इति सं–वत्सरः । वै । षष्ठी । चितिः । ऋतवः । पुरीषम् । षट् । चितयः । भवन्ति । षट् । पुरीषाणि । द्वादश । समिति । पद्यन्ते । द्वादश । मासाः । संवत्सर इति सं–वत्सरः । संवत्सर इति सं–वत्सरे । एव । प्रतीति । तिष्ठति ॥ ४१ ॥

अव चितयः पुरीषं पञ्चदश च ॥ १० ॥

---

अक्षराणि, नाभिर्दशमी । एवमेतैर्दशभिरक्षरैः तद्वान् पुरुषः । तस्माद्दशत्वान्वयात् सर्वमेवैनं पुरुषं स्पृणोति । अथो इत्यादि गतम्* ॥

6संवत्सरो वा इत्यादि ॥ द्वादशस्तुतिः । पुरीषमिति षष्ठम् । तस्माद्द्वादशमासात्मके संवत्सरे प्रतिष्ठितो भवति ॥

इति पञ्चमे षष्ठे दशमोनुवाकः.

---

*सं. ५-४-६.

रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते प्राजापत्या बभ्रुररुणबभ्रुश्शुकबभ्रुस्ते रौद्राश्श्येतश्श्येताक्षश्श्येतग्री-

[1]रोहितः । धूम्ररोहित इति धूम्र-रोहितः । कर्कन्धुरोहित इति कर्कन्धु-रोहितः । ते । प्राजापत्या इति प्राजा-पत्याः । बभ्रुः । अरुणबभ्रुरित्यरुण-बभ्रुः । शुकबभ्रुरिति शुक-बभ्रुः । ते । रौद्राः । श्येतः । श्येताक्ष इति श्येत-अक्षः । श्येतग्रीव इति श्येत-ग्रीवः । ते । पितृदेवत्या इति पितृ-देवत्याः ।

[1]अथाश्वमेधिकाः पशवोऽष्टादशिनो विधीयन्ते । वैश्वदेवं काण्डम् । तत्र दशस्वनुवाकेषु प्रत्येकमष्टादश पशव उच्यन्ते । अष्टादशानां वर्णनियमोऽत्र क्रियते । आरण्येष्वष्टादशिषु जातिनियमः पञ्चमे कृतः । ग्राम्येषूभयथा नियमः ‘सोमाय स्वराज्ञे’* इत्यारभ्य द्वन्द्वादिषु बहुधा नियम इति । रोहितादयस्त्रयः प्राजापत्याः । रोहितः लोहितः । धूम्ररोहितः अस्पष्टलोहितः । ‘वर्णो वर्णेन’ इति समानाधिकरणत्वात् तत्पुरुषः, ‘वर्णोवर्णेष्वनेते’ इति पूर्वपदप्रकृतिस्वरत्वम् । कर्कन्धुरोहितः सौवीरवर्णः । ‘उपमानानि सामान्यवचनैः’ इति समासः । उपमानपूर्वपदप्रकृतिस्वरत्वम् । बभ्र्वादयस्त्रयो रौद्राः । बभ्रुः पाण्डुरकपिलः । अरुणः न्यूनरक्तकपिलः । शुकबभ्रुः हरितशुकसमानवर्णः । ग्रामेकेतौ† स्वरौ । श्येतादयस्त्रयः पितृ-

*सं.५-६-२१. †ग्रामकेतौ.

वस्ते पितृदेवत्यास्तिस्रः कृष्णा वशा वारुण्यस्तिस्रश्श्वेता वशास्सौर्यो मैत्राबार्हस्पत्या धूम्रललामास्तूपराः ॥ ४२ ॥

पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मा-

तिस्रः । कृष्णाः । वशाः । वारुण्यः । तिस्रः । श्वेताः । वशाः । सौर्यः । मैत्राबार्हस्पत्या इति मैत्रा-बार्हस्पत्याः । धूम्रललामा इति धूम्र-ललामाः । तूपराः ॥ ४२ ॥

रोहितष्षड्विंशतिः ॥ ११ ॥

[1]पृश्निः । तिरश्चीनपृश्निरिति तिरश्चीन-पृश्निः ।

देवत्याः । श्येतः शुक्लवर्णः । शुक्लरक्त इत्येके । श्येताक्षः रक्तदृष्टिः । 'अक्ष्णोऽदर्शनात्' इत्यच् समासान्तः । सतिशिष्टत्वात् लित्स्वरेण बहुव्रीहिस्वरो बाध्यते । श्येतग्रीवः । गतः । तिस्रः कृष्णा वशा वारुण्यः । गताः । 'तिसृभ्यो जसः' इति जस उदात्तत्वम् । एवं सर्वत्र । तिस्रः श्वेता वशाः सौर्यः । गताः । एवं धूम्रललामास्त्रयस्तूपराः मैत्रा बार्हस्पत्याः । धूम्रललामाः धूम्रवर्णपुण्ड्राः तूपराः शृङ्गहीनाः ॥

इति पञ्चमे षष्ठे एकादशोनुवाकः.

---

[1]पृश्न्यादयस्त्रयो मारुताः ॥ पृश्निः शुक्लवर्णबिन्दुचितः चित्रवर्णः । तिरश्चीनपृश्निः तिर्यक्प्रततवर्णः पृश्निवर्णः । एतेनोर्ध्व-

रुताः फ़ल्गूर्लोहितोर्णी बलक्षी ता-
स्सारस्वत्यः पृषती स्थूलपृषती क्षु-
द्रपृषती ता वैश्वदेव्यस्तिस्रश्श्यामा
वशाः पौष्णियस्तिस्रो रोहिणीर्वशा

ऊर्ध्वपृश्निरित्यूर्ध्व–पृश्निः । ते । मारुताः । फल्गूः । लोहितोर्णीति लोहित–ऊर्णी । बलक्षी । ताः । सारस्वत्यः । पृषती । स्थूलपृषतीति स्थूल–पृषती । क्षुद्रपृषतीति क्षुद्र–पृषती । ताः । वैश्वदेव्य इति वैश्व–देव्यः । तिस्रः । श्यामाः । वशाः । पौष्णियः । तिस्रः । रोहिणीः । वशाः । मैत्रियः । ऐ-

पृश्निर्व्याख्यातः । उभयत्रापि प्रधानेन बहुव्रीहिः । फल्ग्वादय-स्तिस्रस्सारस्वत्यः । फल्गूः लवणवर्णः । लोहितोर्णी रोहितरोमा। छान्दसो ङीष् । सतिशिष्टेन प्रत्ययस्वरेण बहुव्रीहिस्वरः । बल-क्षी शुक्ला । बवयोरेकत्वमिच्छन्ति । ‘ अन्यतो ङीष् ’ इति ङीष्, नोपधापेक्षमन्यत्वम् । पृषत्यादयस्त्रयो वैश्वदेव्यः । शुक्लैर्बिन्दुभि-श्चिताः मध्यमैः न स्थूलैः न क्षुद्रैः । शतृवद्भावात् ‘ उगितश्च ’ इति ङीप् । स्थूलपृषती स्थूलानि पृषन्ति यस्याः । ‘ उगिद्वर्ण-ग्रहणवर्जम् ’ इति तदन्तग्रहणाभ्यनुज्ञानात् ‘ उगितश्च ’ इति ङीप् । एवं क्षुद्रपृषती । तिस्रः श्यामाः वशाः पौष्ण्यः । गताः । तिस्रो रोहिणीः वशा मैत्र्यः । ‘ वर्णादनुदात्तात् ’ इति ङीब्नकारौ, ‘ वा छन्दसि ’ इति पूर्वसवर्णदीर्घत्वम् । अरुण-

मात्रयं ऐन्द्राबार्हस्पत्या अरुणल-
लामास्तूपराः ॥ ४३ ॥
शितिबाहुरन्यतश्शितिबाहुस्समन्त-
शितिबाहुस्त ऐन्द्रवायवाश्शितिर-
न्ध्रोऽन्यतश्शितिरन्ध्रस्समन्तशिति-

न्द्राबार्हस्पत्या इत्यैन्द्रा–बार्हस्पत्याः । अरुण-
ललामा इत्यरुण–ललामाः । तूपराः ॥ ४३ ॥

पृश्निष्षड्विंशतिः ॥ १२ ॥

[1]शितिबाहुरिति शिति–बाहुः । अन्यतश्शिति-
बाहुरित्यन्यतः–शितिबाहुः । समन्तशितिबाहुरिति
समन्त–शितिबाहुः । ते । ऐन्द्रवायवा इत्यैन्द्र–वा-
यवाः । शितिरन्ध्र इति शिति–रन्ध्रः । अन्यतश्शि-

ललामास्त्रयस्तूपराः ऐन्द्राबार्हस्पत्याः । अरुणललामाः सन्ध्यावर्ण-
पुण्ड्राः ॥

इति पञ्चमे षष्ठे द्वादशोनुवाकः.

[1]शितिबाह्वादयस्त्रय ऐन्द्रवायवाः । शितिः शुक्लो बाह्वेक-
देशो यस्य । ‘ शितेर्नित्या बह्वच् ’ इत्युत्तरपदप्रकृतिस्वरत्वम् । सः
अन्यतश्शितिबाहुः यत्प्रथमस्य शितित्वं ततोन्यत्रैकदेशे शितित्वं यस्य
सः अन्यतश्शितिः । तादृशो बाहुर्यस्येति पुनर्बहुव्रीहौ पूर्वपद-

रन्ध्रस्ते मैत्रावरुणाश्शुद्धवालस्स-
र्वशुद्धवालो मणिवालस्त आश्वि-
नास्तिस्रश्शिल्पा वशा वैश्वदेव्य-
स्तिस्रश्श्येनीः परमेष्ठिने सोमा-

तिरन्ध्र इत्यन्यतः-शितिरन्ध्रः । समन्तशितिरन्ध्र इति समन्त-शितिरन्ध्रः । ते । मैत्रावरुणा इति मैत्रा-वरुणाः । शुद्धवाल इति शुद्ध-वालः । सर्वशुद्धवाल इति सर्व-शुद्धवालः । मणिवाल इति मणि-वालः । ते । आश्विनाः । तिस्रः । शिल्पाः । वशाः । वैश्वदेव्य इति वैश्व-देव्यः । तिस्रः । श्येनीः । परमेष्ठिने । सोमापौष्णा इति सोमा-पौ-

---

प्रकृतिस्वरत्वं पूर्ववदेव । तदन्तविध्यभावात् शितिस्वराभावः । समन्तशितिबाहुः सर्वशुक्लबाहुः । अस्मिन्व्याख्याने उभयत्र शित्यन्तस्याववग्रहः प्राप्नोति । तस्माद्भावप्रधानेन शितिबाहुशब्देन बहुव्रीहिणा पूर्वपदयोः पुनः बहुव्रीहिभिः । शितिरन्ध्रादयो मैत्रावरुणाः । शितिरन्ध्रः शुक्लछिद्रः । पूर्ववदुत्तरपदप्रकृतिस्वरत्वम् । अन्यतश्शितिरन्ध्रसमन्तशितिरन्ध्रौ गतौ । शुद्धवालादयस्त्रय आश्विनाः । शुद्धवालः शुक्लपुच्छवालावयवः । सर्वशुद्धवालः सर्वशुक्लपुच्छः । मणिवालः एकान्तशुक्लाशुक्लचितवालः । तिस्रश्शिल्पा वशा वैश्वदेव्यः । शिल्पा नानावर्णाः । तिस्रश्श्येनीः परमेष्ठिने श्येन्यश्शुक्लाः पूर्वव-

पौष्णाश्श्यामलंलामास्तूपराः ॥४४
उन्नत ऋषभो वामनस्त ऐन्द्रावरु-
णाश्शितिककुच्छितिपृष्ठश्शितिभ-
सत्त ऐन्द्राबार्हस्पत्याश्शितिपा-
च्छित्योष्ठश्शितिभ्रुस्त ऐन्द्रावैष्ण-

ष्णाः । श्यामलंलामा इति श्याम–ललामाः । तूपराः ॥ ४४ ॥

शितिबाहुः पञ्चविंशतिः ॥ १३ ॥

[1]उन्नत इत्युत्–नतः । ऋषभः । वामनः । ते । ऐन्द्रावरुणा इत्यैन्द्रा–वरुणाः । शितिककुदिति शि-ति–ककुत् । शितिपृष्ठ इति शिति–पृष्ठः । शि-तिभसदिति शिति–भसत् । ते । ऐन्द्राबार्हस्पत्या इत्यैन्द्रा–बार्हस्पत्याः । शितिपादिति शिति-पात् । शित्योष्ठ इति शिति–ओष्ठः । शितिभ्रुरि-

---

न्ङीब्नकारौ, पूर्वसवर्णदीर्घत्वं च । श्यामललामास्त्रयस्तूपराः सोमापौष्णाः । गताः ॥

इति पञ्चमे षष्ठे त्रयोदशोनुवाकः.

---

[1]उन्नतादयस्त्रय ऐन्द्रावरुणाः ॥ उन्नतः उन्नतपृष्ठः । ऋषभः सेक्ता । वामनो ह्रस्वाङ्गः । शितिककुदादयस्त्रय ऐन्द्राबार्हस्पत्याः । शुक्लं ककुदमस्येति बहुव्रीहौ 'ककुदस्यावस्थायां लोपः' । नित्या

वास्तिस्रस्सिध्मा वशा वैश्वकर्मण्य-
स्तिस्रो धात्रे पृषोदरा ऐन्द्रापौष्णा-
श्श्येतललामास्तूपराः ॥ ४५ ॥
कर्णास्त्रयो यामास्सौम्यास्त्रयश्श्विति-

ति-शिति-भ्रुः । ते । ऐन्द्रावैष्णवा इत्यैन्द्रा—वैष्ण-वाः । तिस्रः । सिध्माः । वशाः । वैश्वकर्मण्य इति वैश्व—कर्मण्यः । तिस्रः । धात्रे । पृषोदरा इति पृष—उदराः । ऐन्द्रापौष्णा इत्यैन्द्रा—पौष्णाः । श्ये-तललामा इति श्येत—ललामाः । तूपराः ॥ ४५ ॥

उन्नतः पञ्चविꣳशतिः ॥ १४ ॥

[1]कर्णाः । त्रयः । यामाः । सौम्याः । त्र-

बद्धिति वचनात् शितिस्वराभावः । शितिपादादयः त्रय ऐन्द्रावैष्णवाः । गताः । छान्दसं ह्रस्वत्वम् । तिस्रस्सिध्मा वशा वैश्वकर्मण्यः । सिध्माः सिध्मलाङ्गाः प्रादेशिकश्वेताङ्कितदेहाः । तिस्रो धात्रे पृषोदराः पृषन्ति उदरे यासाम् । 'पृषोदरादीनि यथोपदिष्टम्' इति यथाभिमतस्वरूपसिद्धिः । श्वेतललामास्त्रयस्तूपराः ऐन्द्रापौष्णाः गताः ॥

इति पञ्चमे षष्ठे चतुर्दशोनुवाकः.

---

[1]कर्णास्त्रयो यामाः । कर्णाः छिद्रकर्णाः । महाकर्णा इत्येके । मत्वर्थीयोकारः । सौम्यास्त्रयश्श्वितिङ्गाः श्वेतपादाः । अग्नये

ङ्गा अग्नये यविंष्ठाय त्रयो नकुला-
स्तिस्रो रोहिंणीस्त्र्यव्यस्ता वसूंनां
तिस्रोऽरुणा दित्यौह्यंस्ता रुद्राणाꣳ
सोमैन्द्रा बभ्रुलंलामास्तूपराः ॥४६॥

यः । श्वितिङ्गाः । अग्नये । यविंष्ठाय । त्रयंः । नकु-
लाः । तिस्रः । रोहिंणीः । त्र्यव्य इतिं त्रि-अव्यः ।
ताः । वसूंनाम् । तिस्रः । अरुणाः । दित्यौह्यः ।
ताः । रुद्राणाम् । सोमैन्द्रा इतिं सोम-ऐन्द्राः ।
बभ्रुलंलामा इतिं बभ्रु-ललामाः । तूपराः ॥४६॥

कर्णास्त्रयोविꣳशतिः ॥ १५ ॥

---

यविष्ठाय त्रयो नकुलाः नकुलवर्णाः । तिस्रो रोहिणीस्त्र्यव्यस्ता वसूनाम् । रोहिण्यो गताः । त्र्यव्यः अर्धवर्षाः, अविशब्देनान्नवाचिना षष्ठमासो लक्ष्यते, षष्ठे मास्यन्नं दीयत इति । समाहारतायामवयवस्वरनिवृत्तिः । बहुव्रीहिर्वा, व्यत्ययेन 'जसि च' इति गुणो न क्रियते, 'सर्वतोक्तिन्नर्थात्' इति वा ङीप् । व्यत्ययेन वा अनकारान्तादपि 'द्विगोः' इति ङीप्, 'परादिश्छन्दसि' इत्युत्तरपदान्तोदात्तत्वम् । तिस्रोऽरुणा दित्यौह्यस्ता रुद्राणाम् । अरुणा गताः । दित्यौ वाहः तं वहन्तीति 'वहश्च' इति ण्विः, ऊठि सति 'वाहः' इति ङीप् । 'वाह ऊठ्' इत्यूठादेशः, 'एत्येधत्यूठ्सु' इति वृद्धिः । द्विवर्षा उच्यन्ते । बभ्रुललामास्त्रयस्तूपराः सोमैन्द्रा गताः ॥

इति पञ्चमे षष्ठे पञ्चदशोनुवाकः.

---

शुण्ठास्त्रयो वैष्णवा अधीलोधकर्णास्त्रयो विष्णव उरुक्रमाय लप्सुदिनस्त्रयो विष्णव उरुगायाय पञ्चावीस्तिस्र आदित्यानां त्रिवत्सास्तिस्रोऽङ्गिरसामैन्द्रावैष्णवा गौरललामास्तूपराः ॥ ४७ ॥

[1]शुण्ठाः । त्रयः । वैष्णवाः । अधीलोधकर्णा इत्यधीलोध-कर्णाः । त्रयः । विष्णवे । उरुक्रमायेत्युरु-क्रमाय । लप्सुदिनः । त्रयः । विष्णवे । उरुगायायेत्युरु-गायाय । पञ्चावीरिति पञ्च-अवीः । तिस्रः । आदित्यानाम् । त्रिवत्सा इति त्रि-वत्साः । तिस्रः । अङ्गिरसाम् । ऐन्द्रावैष्णवा इत्यैन्द्र-वैष्णवाः । गौरललामा इति गौर-ललामाः । तूपराः ॥ ४७ ॥

शुण्ठा विंशतिः ॥ १६ ॥

---

[1]शुण्ठास्त्रयो वैष्णवाः । शुण्ठाः गूर्णाः आवेष्टितकर्णाः । अल्पकर्णा इत्येके । अधीलोधकर्णास्त्रयो विष्णव उरुक्रमाय । अधीलोधकर्णाः कर्णोपरि प्ररूढकर्णाः । त्रयो लप्सुदिनः विष्णव उरुगायाय । लप्सुदिनः लम्बमानकूर्चाः लम्बमानेन सूदितानि । पृषोदरादिः । तद्धन्तः । उरुभिः महात्मभिः गातव्यः उरुगायः । तिस्रः पञ्चावीः तिस्रः आदित्यानाम् । अर्धतृतीयवर्षा पञ्चाव्यः ।

इन्द्राय राज्ञे त्रयःशितिपृष्ठा इन्द्रा-
याधिराजाय त्रयःशितिककुद इन्द्रा-
य स्वराज्ञे त्रयःशितिभसदस्तिस्र-
स्तुर्यौह्यस्साध्यानां तिस्रः पष्ठौह्यो

[1]इन्द्राय । राज्ञे । त्रयः । शितिपृष्ठा इति शिति-पृष्ठाः । इन्द्राय । अधिराजायेत्यधि-राजाय । त्रयः । शितिककुद इति शिति-ककुदः । इन्द्राय। स्वराज्ञ इति स्व-राज्ञे । त्रयः । शितिभसद इति शिति-भसदः । तिस्रः । तुर्यौह्यः । साध्यानाम् । तिस्रः । पष्ठौह्यः । विश्वेषाम् । देवानाम् । आग्ने-

---

द्विगुपक्षे 'इगन्तकाल' इति पूर्वपदप्रकृतिस्वरः । त्रिवत्साः तिस्रोऽङ्गिरसां त्रिवर्षाः तिस्रोऽङ्गिरसां वत्सरस्य । गौरललामास्त्रयस्तूपराः ऐन्द्रावैष्णवाः गताः ॥

इति पञ्चमे षष्ठे षोडशोनुवाकः.

[1]इन्द्राय राज्ञे त्रयश्शितिपृष्ठाः । पूर्ववच्छितिस्वरः । इन्द्रायाधिराजाय त्रयश्शितिककुदः । अधिरूढो राजा अधिराजः । स्वराभाव उक्तः । इन्द्राय स्वराज्ञे त्रयः शितिभसदः । स्वयमेव राजतीति स्वराजा । 'न पूजनात्' इति वचनाट्टजभावः । उक्तः स्वरः । तिस्रस्तुर्यौह्यस्साध्यानाम् । तुर्योर्धचतुर्वर्षा दित्यौहिभिर्वा व्याताः । तुर्यं युगचतुर्थं । तिस्रः पष्ठौह्यो विश्वेषां देवानाम् ।

विश्वेषां देवानामाग्नेन्द्राः कृष्णल-
लामास्तूपराः ॥ ४८ ॥
अदित्यै त्रयो रोहितैता इन्द्राण्यै
त्रयः कृष्णैताः कुह्वै त्रयोऽरुणैता-
स्तिस्रो धेनवो राकायै त्रयोऽनड्वा-

न्द्राः । कृष्णललामा इति कृष्ण-ललामाः । तू-
पराः ॥ ४७ ॥

इन्द्राय द्वाविꣳशतिः ॥ १८ ॥

[1]अदित्यै । त्रयः । रोहितैता इति रोहित-ए-
ताः । इन्द्राण्यै । त्रयः । कृष्णैता इति कृष्ण-ए-
ताः । कुह्वै । त्रयः । अरुणैता इत्यरुण-एताः ।
तिस्रः । धेनवः । राकायै । त्रयः । अनड्वाहः ।

पष्ठौह्यश्चतुर्वर्षाः । पष्ठो युगपार्श्वम् । कृष्णललामास्तूपराः आ-
ग्नेन्द्राः गताः ॥

इति पञ्चमे षष्ठे सप्तदशोनुवाकः.

[1]अदित्यै त्रयो रोहितैताः ॥ रोहिताश्च ते एताश्चेति रोहितैताः । 'वर्णो वर्णेन' इति समासः । 'अनेतः' इति प्रतिषेधात् पूर्व-पदप्रकृतिस्वराभाव उक्तः । इन्द्राण्यै त्रयः कृष्णैताः । तावेव स्वरसमासौ । कुह्वै त्रयोऽरुणैताः गताः । तिस्रो धेनवो राकायै धेनवः प्रत्यग्रप्रसवा गावः । त्रयोऽनड्वाहः सिनीवाल्यै । अनो

हंस्सिनीवाल्या आग्नावैष्णवा रोहि-
तललामास्तूपराः ॥ ४९ ॥
सौम्यास्त्रयः पिशङ्गास्सोमाय राज्ञे
त्रयस्सारङ्गाः पार्जन्या नभोरूपा-
स्तिस्रोजा मल्हा इन्द्राण्यै तिस्रो
मेष्य आदित्या द्यावापृथिव्या मा-
लङ्गास्तूपराः ॥ ५० ॥

सिनीवाल्यै । आग्नावैष्णवा इत्याग्ना—वैष्णवाः । रो-
हितललामा इति रोहित—ललामाः । तूपराः ॥४९॥
अदित्या अष्टादश ॥ १८ ॥

[1]सौम्याः । त्रयः । पिशङ्गाः । सोमाय । राज्ञे । त्रयः । सारङ्गाः । पार्जन्याः । नभोरूपा इति नभः—रूपाः । तिस्रः । अजाः । मल्हाः । इन्द्राण्यै । तिस्रः । मेष्यः । आदित्याः । द्यावापृथिव्या

वहन्तीत्यनड्वाहः अनोवहनसमर्थाः । पृषोदरादिः । लोहितललामाः त्रयस्तूपराः आग्नावैष्णवाः गताः ॥

इति पञ्चमे षष्ठे अष्टादशोनुवाकः.

---

[1]सौम्यास्त्रयः पिशङ्गाः गोरोचनवर्णाः । पर्जन्यादयस्त्रयो नभोरूपाः अञ्जनवर्णास्तिस्रोऽजा इन्द्राण्यै मल्हाः कण्ठावलम्बितस्त-

वारुणास्त्रयः कृष्णललामा वरुणा-
य राज्ञे त्रयो रोहितललामा वरुणा-
य रिशादसे त्रयोऽरुणललामाश्शि-
ल्पास्त्रयो वैश्वदेवास्त्रयः पृश्नयस्स-

इति द्यावा-पृथिव्याः । मालङ्गाः । तूपराः ॥५०॥
सौम्या एकान्न विंशतिः ॥ १९ ॥

वारुणाः । त्रयः । कृष्णललामा इति कृष्ण-ललामाः । वरुणाय । राज्ञे । त्रयः । रोहितललामा इति रोहित-ललामाः । वरुणाय । रिशादस इति रिश-अदसे । त्रयः । अरुणललामा इत्यरुण-ललामाः । शिल्पाः । त्रयः । वैश्वदेवा इति वैश्व-देवाः । त्रयः । पृश्नयः । सर्वदेवत्या इति

नयुग्मास्तिस्रः इन्द्राण्यै । तिस्रो मेष्यः आदित्याः । मेषवर्णा इत्येके । द्यावापृथिव्यास्त्रयो मालङ्गाः महाकायाः ॥

इति पञ्चमे षष्ठे एकोनविंशोनुवाकः.

---

वारुणास्त्रयः कृष्णललामाः गताः । वरुणाय राज्ञे त्रयो रोहितललामाः । राजत्वमस्य विशेषः । वरुणाय रिशादसे त्रयोऽरुणललामाः रिशादस्त्वमस्येति विशेषः । रिशादसः लोकहिंसकानां रक्ताङ्गानां नाशयिता रिशादसाः । 'गतिकारकयो-

वैदेवत्या ऐन्द्रासूराश्श्येतललामा-
स्तूपराः ॥ ५१ ॥
सोमाय स्वराज्ञेऽनोवाहावनड्वाहौ-
विन्द्राग्निभ्यामोजोदाभ्यामुष्टाराव-
न्द्राग्निभ्यां बलदाभ्याꣳ सीरवाहाव-

सर्व-देवत्याः । ऐन्द्रासूरा इत्यैन्द्रा-सूराः । श्येत-ललामा इति श्येत-ललामाः । तूपराः ॥ ५१ ॥

वारुणा विꣳशतिः ॥ २० ॥

[1]सोमाय । स्वराज्ञ इति स्व-राज्ञे । अनोवाहावित्यनः-वाहौ । अनड्वाहौ । इन्द्राग्निभ्यामितीन्द्राग्नि-भ्याम् । ओजोदाभ्यामित्योजः-दाभ्याम् । उष्टारौ । इन्द्राग्निभ्यामितीन्द्राग्नि-भ्याम् । बलदा-

रपि' इत्यसुन्, पूर्वपदप्रकृतिस्वरत्वं च शिल्पाः । त्रयो वैश्वदेवाः गताः । त्रयः पृश्नयः सर्वदेवत्याः । सर्वदेवशब्दात् 'देवतान्तात्तादर्थ्ये यत्' श्वेतललामाः त्रयस्तूपरा ऐन्द्रासूराः । 'सूर्यतिष्य' इति यलोपः ॥

इति पञ्चमे षष्ठे विंशोनुवाकः.

---

[1]सोमाय स्वराज्ञेऽनोवाहावनड्वाहौ ॥ शकटस्य वोढारौ पुङ्गवौ । इन्द्राग्निभ्यां ओजोदाभ्यां उष्टारौ प्रासङ्गस्य वोढारौ अन-

वी द्वे धेनू भौमी दिग्भ्यो वडबे द्वे धेनू भौमी वैराजी पुरुषी द्वे धेनू भौमी वायवं आरोहणवाहावंनड्वाहौ वारु-णी कृष्णे वशे अराड्यौ दिव्यावृ-षभौ परिमरौ ॥ ५२ ॥

भ्यामिति बल-दाभ्याम्। सीरवाहाविति सीर-वाहौ। अवी इति। द्वे इति। धेनू इति। भौमी इति। दिग्भ्य इति दिक्-भ्यः। वडबे इति। द्वे इति। धेनू इति। भौमी इति। वैराजी इति। पुरुषी इति। द्वे इति। धेनू इति। भौमी इति। वायवं। आरोहणवाहा-वित्यारोहण-वाहौ। अनड्वाहौ। वारुणी इति।

ड्वाहौ। इन्द्राग्निभ्यां बलदाभ्यां सीरवाहौ हलस्य वोढारौ अन-ड्वाहौ। इन्द्राग्निशब्दे 'देवताद्वन्द्वे च' इति प्राप्तस्य युगपत्प्र-कृतिस्वरस्य 'नोत्तरपदेऽनुदात्तादौ' इति प्रतिषेधः। अवी द्वे धेनू भौमी भूमिदेवत्ये। पूर्ववत् सवर्णदीर्घत्वम्। इन्द्राग्निभ्यामेवावी इति केचित्। दिग्भ्यो वडबे अश्वस्त्रियौ द्वे भौमी भौम्ये गते। वैराजी विराड्देवत्ये पुरुषी मनुष्यस्त्रियौ। जातिलक्षणो ङीष्। पूर्वत्र उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। पुनर्धेनू भौमी गते। वायव आरोहणवाहौ मनुष्यादेरारोहणादेः वोढारौ। तत एवाण्। कृष्णे वशे वारुण्यौ गते। अराड्यौ दिव्यौ वृषभौ अराड्यौ दीर्घोच्छ्रितशृङ्गौ। दिव्यौ द्युदेवत्यौ। वृषभौ

एकादश प्रातर्गव्याः पशव आ ल-
भ्यन्ते छगलः कल्माषः किकिदी-
विर्विदीगयस्ते त्वाष्ट्रास्सौरीर्नव श्वे-
ता वशा अनूबन्ध्या भवन्त्याग्नेय

कृष्णे इति । वशे इति । अराड्यौ । दिड्यौ । ऋ-
षभौ । परिमरावितिं परि-मरौ ॥ ५२ ॥

सोमाय चतुस्त्रिंशत् ॥ २१ ॥

[1]एकादश । प्रातः । गव्याः । पशवः । एति ।
लभ्यन्ते । छगलः । कल्माषः । किकिदीविः ।
विदीगयः । ते । त्वाष्ट्राः । सौरीः । नव । श्वेताः ।
वशाः । अनूबन्ध्या इत्यनु-बन्ध्याः । भवन्ति ।

सेक्तारौ । परिमरौ परिमर्तारौ ययोः द्वयोः मृतानुजौ मृतपूर्व-
जौ चोच्येते । 'परेरभितो भाविमण्डलं' इत्युत्तरपदान्तोदात्तत्वम् ॥

इति पञ्चमे षष्ठे एकविंशोनुवाकः.

[1]एकादशेत्यादि ॥ उत्तमेऽहनि प्रातरालभ्यन्ते 'प्राजापत्या भ-
वन्ति'* इति ब्राह्मणम् । प्राजापत्या वैश्वदेवा इति केचित् ।
गोरपत्यानि गव्याः सर्वत्र 'गोरजादिप्रसङ्गे' इति यत्, "य-
तो नावः' इति व्यत्ययेन प्रार्नते । छगलादयश्चत्वारः । पशु-
वोस्मिन्नहन्यालभ्यन्ते त्वाष्ट्राः । छगलः छागिकः । कल्माषः

*ब्रा. ३-९-१.

ऐन्द्राग्न आश्विनस्ते विशालयूप आ लभ्यन्ते ॥ ५३ ॥

पिशङ्गास्त्रयो वासन्तास्सारङ्गास्त्रयो ग्रैष्माः पृषन्तस्त्रयो वार्षिकाः पृश्नयस्त्रयश्शारदाः पृश्निसक्थास्त्रयो हैमन्तिका अवलिप्तास्त्रयश्शै-

आग्नेयः । ऐन्द्राग्न इत्यैन्द्र–अग्नः । आश्विनः । ते । विशालयूप इति विशाल–यूपे । एति । लभ्यन्ते ॥ ५३

एकादश पञ्चविंशतिः ॥ २२ ॥

[1]पिशङ्गाः । त्रयः । वासन्ताः । सारङ्गाः । त्रयः । ग्रैष्माः । पृषन्तः । त्रयः । वार्षिकाः । पृश्नयः । त्रयः । शारदाः । पृश्निसक्था इति पृश्नि–सक्थाः । त्रयः । हैमन्तिकाः । अवलिप्ता इत्यव–लिप्ताः । त्रयः । शैशिराः । संवत्सरायेति सं–व-

कल्माषवर्णः । किकिदीविः........सदृश इत्यन्ये । श्वेतवशा नव अनूबन्ध्या भवन्ति सौर्यः । उक्तं पूर्वसवर्णदीर्घत्वम् । आग्नेयादयस्त्रयो विशालयूपे मध्यम आलभ्यन्ते । विशालशृङ्गो यूपो विशालयूपः । 'वेश्शालच्छङ्कटचौ' ॥

इति पञ्चमे षष्ठे द्वाविंशोनुवाकः.

[1]पिशङ्गादय ऋतुपशवः प्रत्यृतु त्रयस्त्रयः । 'सक्थश्चाक्रान्तात्' इत्युत्तरपदान्तोदात्तत्वम् । हैमन्तिका इति । 'हेमन्ताच्च' इति ठञ् । अवलिप्ताः वर्णान्तरस्योपरि वर्णान्तर-

शिरास्संवथ्सराय निवक्षसः ॥५४॥

त्सराय । निवक्षस इति नि—वक्षसः ॥ ५४ ॥

पिशङ्गा विंशतिः ॥ २३ ॥

रोहितः कृष्णा धूम्रललामाः पृश्निश्श्यामा अ-
रुणललामाश्शितिबाहुश्शिल्पाश्श्येनीश्श्यामल -
लामा उन्नतास्सिध्मा धात्रे पौष्णाश्श्येतललामाः
कर्णा बभ्रुलल्लामाश्शुण्ठा गौरललामा इन्द्राय कृ-
ष्णललामा अदित्यै रोहितललामास्सौम्या मा-
लङ्गा वारुणास्सूराश्श्येतललामा दश ॥

हिरण्यवर्णा अपां ग्रहान्भूतेष्टकास्सजूस्संवत्सरं
प्रजापतिस्स क्षुरपविरग्नेर्वै दीक्षया सुवर्गाय तं यन्न
सूयते प्रजापतिर् क्रतुभी रोहितः पृश्निश्शितिबा-
हुरुन्नतः कर्णाश्शुण्ठा इन्द्रायादित्यै सौम्या वारु-
णास्सोमायैकादश पिशङ्गास्त्रयोविंशतिः ॥२३॥

हिरण्णवर्णा भूतेष्टकाश्छन्दो यत्कनीयांसं
त्रिवृदृच्यग्निर्यद्वै वारुणाश्चतुःपञ्चाशत् ॥५४॥

हरिः ओम्. समाप्तष्षष्ठप्रपाठकः.

लिप्ताः । स्तब्धा इत्यन्ये । संवत्सराय निवक्षस आलभ्यते ।
निवक्षसः निम्नवक्षसः ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानय-
ज्ञाख्ये पञ्चमे काण्डे षष्ठप्रश्ने त्रयोविंशोनुवाकः.

समाप्तश्च प्रपाठकः.

सप्तमप्रपाठकप्रारम्भः

हरिः ओम् ॥ यो वा अयथादेवत-
मग्निं चिनुत आ देवताभ्यो वृश्च्यते
पापीयान्भवति यो यथादेवतं न दे-
वताभ्य आ वृश्च्यते वसीयान्भवत्या-
ग्नेय्या गायत्रिया प्रथमां चितिमभि

[1]यः । वै । अयथादेवतमित्ययथा—देवतम् । अग्निम् । चिनुते । एति । देवताभ्यः । वृश्च्यते । पापीयान् । भवति । यः । यथादेवतमिति यथा—देवतम् । न । देवताभ्यः । एति । वृश्च्यते । वसीयान् । भवति । [2]आग्नेय्या । गायत्रिया । प्रथमाम् । चितिम् । अभीति । मृशेत् । त्रिष्टुभा । द्विती-

[1]अथाग्निकाण्डमग्न्यार्षेयम्—'यो वा अयथादेवतं' इत्यभिमर्शनविधिः ॥ यथादेवतं या यत्र देवता तद्यथादेवतम् । अन्याम्न्या देवतया यश्चिनुतेऽग्निं स सर्वाभ्यो देवताभ्यो वृश्च्यते, पापतरश्च भवति । यो यथादेवतमित्यादि । गतम् । देवताशब्देनाग्निरुच्यते ॥

[2]तदेवाह—आग्नेय्येति ॥ 'अग्ने देवां इहावह'* इति गायत्र्या । त्रिष्टुभेति आग्नेय्येत्येवं सर्वत्र 'अगन्म महा मनसा'* इति ।

*ब्रा. ३-११-६.

मृशेत्त्रिष्टुभा द्वितीयां जगत्या तृतीयामनुष्टुभा चतुर्थीं पङ्क्त्या पञ्चमीं यथादेवतमेवाग्निं चिनुते न देवताभ्य आ वृश्चयते वसीयान्भवतीडायै वा एषा विभक्तिः पशव इडा पशु-

याम् । जगत्या । तृतीयाम् । अनुष्टुभेत्यनु—स्तुभा । चतुर्थीम् । पङ्क्त्या । पञ्चमीम् । यथादेवतमिति यथा—देवतम् । एव । अग्निम् । चिनुते । न । देवताभ्यः । एति । वृश्चयते । वसीयान् । भवति । [3]इडायै । वै । एषा । विभक्तिरिति वि—भक्तिः । पशवः । इडा । पशुभिरिति पशु—भिः । एनम् ॥ १ ॥ चिनुते । [4]यः । वै । प्रजापतय इति

जगत्येति । 'मेधाकारं विदथस्य'* इति । अनुष्टुभेति 'मनुष्वत्त्वा निधीमहि'* इति । पङ्क्त्येति 'अग्निर्हि वाजिनं विशे'* इति ॥

[3]इडायै वा एषेति ॥ इडा पशवः 'पशवो वा इडा'† इति पशूनामेषा । विभक्तिर्विभागः गायत्र्यादि, 'पशवो वै छन्दांसि'‡ इति पशुसाधनत्वात् । तस्माद्गायत्र्यादिभिः चिन्वानो भवति पशुमान् ॥

[4]यो वै प्रजापतय इत्यादि ॥ प्रतिप्रोच्य अनुज्ञाप्य अग्निं

*ब्रा. ३-११-६. †सं. २-६-८. ‡सं. ५-३-८.

भिरेनम् ॥ १ ॥ चिनुते यो वै प्रजापतये प्रतिप्रोच्याग्निं चिनोति नार्तिमार्छत्यश्वावभितस्तिष्ठेतां कृष्ण उत्तरतश्श्वेतो दक्षिणस्तावालभ्येष्टका उप दध्यादेतद्वै प्रजापते रूपं प्राजापत्योश्वस्साक्षादेव प्रजापतये प्रतिप्रोच्याग्निं चिनोति नार्तिमार्छ-

प्रजा–पतये । प्रतिप्रोच्येति प्रति–प्रोच्य । अग्निम् । चिनोति । न । आर्तिम् । एति । ऋच्छति । 5अश्वौ । अभितः । तिष्ठेताम् । कृष्णः । उत्तरत इत्युत्–तरतः । श्वेतः । दक्षिणः । तौ । आलभ्येत्या–लभ्य । इष्टकाः । उपेति । दध्यात् । एतत् । वै । प्रजापतेरिति प्रजा–पतेः । रूपम् । प्राजापत्य इति प्राजा–पत्यः । अश्वः । साक्षादिति स–अक्षात् । एव । प्रजापतय इति प्रजा–पतये । प्रतिप्रोच्येति प्रति–प्रोच्य । अग्निम् । चिनोति । न ।

---

चिन्वानो नार्तिं गच्छति । अन्यथा कुर्वन्नार्तिं गच्छतीत्येवेति ॥

5तत्प्रकारमाह—अश्वावित्यादि ॥ अभितः उभयतः । आलभ्य स्पृष्ट्वा प्रजापतेरिदं रूपमश्वत्वेन वर्तते यस्मात् प्राजापत्योऽश्वः । साक्षादित्यादि । गतम् ॥

त्येतद्वा अह्नो रूपं यच्छ्वेतोऽश्वो रात्रियै कृष्ण एतदह्नः ॥ २ ॥ रूपं यदिष्टका रात्रियै पुरीषमिष्टका उपधास्यञ्छ्वेतमश्वमभि मृशेत्पुरीषमुपधास्यन्कृष्णमहोरात्राभ्यामेवैनं चिनुते

आर्तिम् । एति । ऋच्छति । [6]एतत् । वै । अह्नः । रूपम् । यत् । श्वेतः । अश्वः । रात्रियै । कृष्णः । एतत् । अह्नः ॥ २ ॥ रूपम् । यत् । इष्टकाः । रात्रियै । पुरीषम् । इष्टकाः । उपधास्यन्नित्युप-धास्यन् । श्वेतम् । अश्वम् । अभीति । मृशेत् । पुरीषम् । उपधास्यन्नित्युप-धास्यन् । कृष्णम् । अहोरात्राभ्यामित्यहः-रात्राभ्याम् । एव । एनम् । चिनुते । [7]हिरण्यपात्रमिति हिरण्य-पात्रम् । मधोः ।

---

[6]एतद्वा इत्यादि ॥ श्वेतोऽश्वोऽह्नो रूपमेतेन रूपेण अहर्वर्तते रात्रियै कृष्ण इति । एतद्रात्र्या रूपं यत्कृष्णोऽश्व इति यावत् । रूपान्तरं च दर्शयति—एतदह्न इति । अह्नो रूपमिष्टकाः रात्र्या रूपं पुरीषम् । तस्मादिष्टकाः उपधास्यन् श्वेतमश्वमभिमृशेत् । पुरीषमुपधास्यन् कृष्णमभिमृशेत् । एवमहोरात्राभ्यामेव अग्निश्चितो भवति ॥

[7]हिरण्यपात्रमिति ॥ गतम् । मधुन इति लिङ्गव्यत्ययः, उभ-

हिरण्यपात्रं मधोः पूर्णं ददाति म-
धव्योऽसानीति सौर्या चित्रवत्याऽवे-
क्षते चित्रमेव भवति मध्यन्दिनेऽ-
श्वमवं घ्रापयत्यसौ वा आदित्य इ-
न्द्रं एष प्रजापतिः प्राजापत्योऽश्व-
स्तमेव साक्षादृभ्नोति ॥ ३ ॥

पूर्णम् । ददाति । मधव्यः । असानि । इति । सौ-
र्या । चित्रवत्येति चित्र—वत्या । अवेति । ईक्षते ।
चित्रम् । एव । भवति । [8]मध्यन्दिने । अश्वम् ।
अवेति । घ्रापयति । असौ । वै । आदित्यः । इ-
न्द्रः । एषः । प्रजापतिरिति प्रजा—पतिः । प्राजा-

यलिङ्गो वा । 'पूरणगुण' इति समासप्रतिषेधात् षष्ठी ज्ञाप्यते । मधव्य इति । मध्वर्हः मधुपर्कार्हो भवतीत्यनेनाभिप्रायेण हिरण्यपात्रं दद्यात् । मधोरिति । यदेतस्मादपि निर्देशात्पुल्लिङ्गोप्यस्तीति ज्ञायते । सौर्येति । 'चित्रं देवानां'* इति चित्रवत्या । अवेक्षते प्रागेव दानाद्धिरण्यपात्रमवेक्षते । चित्रमेवेति । प्रजाभिः पशुभिश्च चित्रत्वं यजमानस्य भवति ॥

[8]मध्यन्दिन इति ॥ अह्नो मध्यं मध्यन्दिनम् । द्वितीयं वासरम् । तत्र तत्पात्रमवघ्रापयति । छान्दसं णौ कर्तुः कर्मत्वम् । असौ वा इत्यादि । मध्यन्दिनस्येन्द्रत्वात् इन्द्रादित्ययोरभेदस्तुतिः । अश्वस्य प्राजापत्यत्वात् प्रजापत्यश्वयोरभेदस्तुतिः । तमेवाह—प्राजापत्योश्व इति ।

*सं. २-४-१४.

त्वाम॑ग्ने वृ॒ष॒भं चे॑कि॒तानं॒ पुन॒र्युवा॑नं
ज॒नय॑न्नु॒पागा॑म् । अ॒स्थू॒रिणो॒ गार्-

प॒त्य इति॑ प्राजा-प॒त्यः । अश्वः॑ । तम् । ए॒व ।
सा॒क्षादिति॑ स-अ॒क्षात् । ऋ॒ध्नोति॑ ॥ ३ ॥

ए॒नमे॒तद॑ह्नोष्टाच॑त्वारिꣳशच्च ॥ १ ॥

[1]त्वाम् । अ॒ग्ने । वृ॒ष॒भम् । चे॒कि॒तान॑म् । पुन॑ः ।
युवा॑नम् । ज॒नय॑न्न् । उ॒पा॒गा॒मित्यु॑प-आ॒गाम् ।

तमेव प्रजापतिं साक्षादव्यवधानेन ऋध्नोति ऋद्धिमन्तं करोति यद-श्वेनाघ्रापयतीति ॥

इति पञ्चमे सप्तमे प्रथमोनुवाकः.

---

[1]चित्याश्चित्यामृषभमुपदधाति—त्वामग्न इति त्रिष्टुभा ॥ हे अग्ने त्वां वृषभं वर्षितारं कामानां चेकितानं सर्वस्य ज्ञातारम् । कित ज्ञाने, लुगन्तः । छान्दसस्य लिटः कानजादेशः । ईदृशं त्वां युवानं जनयन् प्रजार्थं कुर्वन् । हेतौ शतृप्रत्ययः । पुनःपुन-रुपागां अभिमुख्येनोपगच्छामि । छान्दसो लुङ्, "गतिर्गतौ" इति पूर्वो गतिर्निहन्यते । अस्थूरि अस्थूरीणि असारवन्ति अनो-वहनसामर्थ्यं स्थौल्यं सारत्वं, तद्रहितानि । 'सुपां सुलुक्' इति शेर्लुक् "शेश्छन्दसि' इति हेर्लोपे दीर्घत्वं स्यात् । ई-दृशानि गार्हपत्यानि गृहपतितुल्यानि स्वामिभावाः नः अस्माकं सन्तु । छान्दसं सांहितिकं णत्वम् । यथोक्तं प्रातिशाख्ये—'षु-

हंपत्यानि सन्तु तिग्मेन नो ब्रह्मणा सꣳ शिशाधि । पशवो वा एते यदिष्टकाश्चित्यांचित्यामृषभमुप दधाति मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय तस्माद्यूथेयूथ ऋषभः ।

अस्थूरि । नः । गार्हपत्यानीति गार्ह-पत्यानि । सन्तु । तिग्मेन । नः । ब्रह्मणा । समिति । शिशाधि । [2] पशवः । वै । एते । यत् । इष्टकाः । चित्यांचित्यामिति चित्यां-चित्याम् । ऋषभम् । उपेति । दधाति । मिथुनम् । एव । अस्य । तत् । यज्ञे । करोति । प्रजननायेति प्र-जननाय । त-

---

षूकाधिसुवस्सामिन्द्रास्थूरि '* इति । किञ्च—तिग्मेन ब्रह्मणा ब्रह्मवर्चसेन नः अस्मान् संशिशाधि सम्यक् शितान् कुरु । यद्वा—ब्रह्मणः अध्ययनादिना कर्मणा संशितव्रतात् कुरु । श्यतेर्लेटि "बहुलं छन्दसि' इति शपश्लुः, इत्वं चाभ्यासस्य 'वा छन्दसि' इति इत्वप्रतिषेधेन ङित्त्वाभावात् 'ङितश्च' इति इगभावः ॥

[2]अथात्रैव ब्राह्मणम्—पशवो वा इत्यादि ॥ गतम् । तस्मादित्यादि । तस्मादिदानीं यूथेयूथे ऋषभः सञ्चरति । 'अनुदात्तं च' इति द्वितीयो निहन्यते ॥

---

*७-२.

संवथ्सरस्य प्रतिमां यां त्वा रात्र्यु-
पासते । प्रजाꣳ सुवीरां कृत्वा वि-
श्वमायुर्व्यश्नवत् । प्राजपत्याम् ॥४॥
एतामुप दधातीयं वावैषैकाष्टका य-

स्मात् । यूथेयूथ इति यूथे-यूथे । ऋषभः । [3]सं-
वत्सरस्येति सं-वत्सरस्य । प्रतिमामिति प्रति-
माम् । याम् । त्वा । रात्रि । उपासत इत्युप-आ-
सते । प्रजामिति प्र-जाम् । सुवीरामिति सु-वी-
राम् । कृत्वा । विश्वम् । आयुः । वीति । अश्न-
वत् । [4]प्राजापत्यामिति प्राजा-पत्याम् ॥ ४ ॥
एताम् । उपेति । दधाति । इयम् । वाव । एषा ।

[3]प्राजापत्यामिष्टकां उपदधाति—संवत्सरस्येत्यनुष्टुभा ॥ हे रात्रि एकाष्टके । 'कृदिकारादक्तिनः' इति ङीष् । संवत्सरस्य प्रतिमां प्रतिनिधिम् । 'एतस्यां वा एष एतां रात्रिं वसति'* इति वचनात्संवत्सरतुल्यां यां त्वां सर्वेऽप्युपासते त्वा त्वां कृत्वा उपधाय प्रजां सुवीरां शोभनपुत्रादिकां यजमानो विश्वं चायुः पुरुषायुषं व्यश्नवत् प्राप्नोति । अश्नोतेर्लेटि व्यत्ययेन परस्मैपदं, 'लेटोडाटौ' इत्यडागमः । 'शात्' इति प्रतिषेधं बाधित्वा व्यत्ययेन नकारस्य णकारः 'वीरवीर्यौ च' इति सुवीरे उत्तरपदाद्युदात्तत्वम् ॥

[4]अत्रैव ब्राह्मणम्—प्राजापत्यामित्यादि ॥ इयमेव पृथिवी । एषा

*सं. ७-४-८.

देवैकाष्टकायामन्नं क्रियते तदेवैत-
याऽव रुन्ध एषा वै प्रजापतेः का-
मदुघा तयैव यजमानोऽमुष्मिंल्लो-
केऽग्निं दुहे येन देवा ज्योतिषोर्ध्वा
उदायन् येनादित्या वसवो येन रु-

एकाष्टकेत्येक–अष्टका । यत् । एव । एकाष्टकाया-मित्येक–अष्टकायाम् । अन्नम् । क्रियते । तत् । एव । एतया । अवेति । रुन्धे । [5]एषा । वै । प्र-जापतेरिति प्रजा–पतेः । कामदुघेति काम–दुघा । तया । एव । यजमानः । अमुष्मिन् । लोके । अ-ग्निम् । दुहे । [6]येन । देवाः । ज्योतिषा । ऊर्ध्वाः । उदायन्नित्युत्–आयन् । येन । आदित्याः । वसवः ।

---

एकाष्टका रात्रिः । तस्माद्यदेवान्नं अष्टकादिकं एकाष्टकायां क्रियते तदेतया इष्टकया अवरुन्धे । अन्नाधारत्वादस्याः सर्वान्नाधार-पृथिवीत्वेन स्तुतिः कृता ॥

[5]एषा वा इत्यादि ॥ प्रजापतेः सर्वान् कामान् एषा दुग्ध-वती । तस्मादियं प्राजापत्येति भावः । ‘ दुहः कब्घश्च ’ इति क्सप्रत्ययः । यस्मादेवं तस्माद्यजमानोऽपि अमुष्मिन् भोगस्थाने अग्निं दुहे दुग्धे सर्वान्कामान् । ‘ लोपस्त आत्मनेपदेषु ’ इति तलोपः ॥

[6]उख्यमुपसमिन्धे—येन देवा इत्यादित्रिष्टुभा ॥ येन ज्योति-षा दीप्त्या देवा ऊर्ध्वमायन् ऊर्ध्वगतय उदायन् गताः स्वर्गि-

द्राः । येनाङ्गिरसो महिमानंमान-
शुस्तेनैतु यजंमानस्स्वस्ति । सुव-
र्गाय वा एष लोकायं ॥ ५ ॥ चीः
यते यदग्निर्येनं देवा ज्योतिषोर्ध्वा
उदायन्नित्युख्यꣳ समिन्ध इष्टंकाएं-
वैता उपं धत्ते वानस्पत्यास्सुंवर्गस्यं

येनं । रुद्राः । येनं । अङ्गिंरसः । महिमानंम् । आ-
नशुः । तेनं । एतु । यजंमानः । स्वस्ति । सुव-
र्गायेतिं सुवः—गायं । वै । एषः । लोकायं ॥ ५ ॥
चीयते । यत् । अग्निः । येनं । देवाः । ज्योतिषा ।
ऊर्ध्वाः । उदायन्नित्युंत्—आयन्नं । इतिं । उख्यंम् ।
सामितिं । इन्धे । इष्टंकाः । एव । एताः । उपेतिं ।
धत्ते । वानस्पत्याः । सुवर्गस्येतिं सुवः—गस्यं ।

णोऽभवन् । येन चादित्या वसवो रुद्राश्च ऊर्ध्वा उदायन्न् येन ज्योतिषाऽङ्गिरसो महिमानं महत्त्वमानशुः प्राप्ताः । अश्नोतेर्व्यत्ययेन परस्मैपदम्, 'अश्नोतेश्च' इति नुट् । तेन ज्योतिषा यजमानोपि स्वस्ति अविनाशं स्थानमेतु, अविनाशं वा स्थानमविघ्नेन गच्छतु ॥

[7]अथात्रैव ब्राह्मणम्—सुवर्गायेत्यादि ॥ गतम्* । इष्टका एवेति । वानस्पत्या इष्टका एता उपधत्ते । याभिस्समिद्भिरुपसमि-

*सं. ५-६-८.

लोकस्य समंष्ट्यै शतायुंधाय श-
तवींर्याय शतोतंयेऽभिमातिषाहें ।
शतं यो नंश्शरदो अजींतानिन्द्रों ने-
षदतिं दुरितानि विश्वां । ये चत्वा-

लोकंस्यं । समंष्ट्या इति सं–अष्ट्यै । [8]शतायुंधा-
येतिं शत–आयुधाय । शतवींर्यायेतिं शत–वीर्या-
य । शतोतंय इतिं शत–ऊतये । अभिमातिषाहे
इत्यभिमाति–साहें । शतम् । यः । नः । शरदः ।
अजींतान् । इन्द्रः । नेषत् । अतीतिं । दुरितानी-

न्धे तत्सुवर्गस्य समष्ट्यै प्राप्त्यै भवति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[8]अज्यानीरुपदधाति—शतायुधायेत्याद्याः पञ्च सर्वास्त्रिष्टुभः ॥ यं इन्द्रः शतं शरदो वत्सरान्नः अस्मान् । अजीतान् अक्षीणान् व्याध्यादिभिः अपीडितान् । ज्या वयोहानौ, ग्रहिज्यादिना संप्रसारणम् । यद्वा—अजितान् । छान्दसं दीर्घत्वं जयतेः । नेषत् नेतुं समर्थ अर्हो वा । विश्वानि दुरितानि अतीत्य विनिवार्य नेतुं य एव समर्थः । नयतेर्लेटि 'सिब्बहुलं लेटि' इति सिप अडागमः । तस्मै शतायुधाय बह्वायुधाय (बहुलं लाय) शतोतये बहुरक्षणाय अभिमातिषाहे पापानामभिभवित्रे । 'छन्दसि सहः' इति ण्विः, सुषामादित्वात् षत्वम् । चतुर्थीसामर्थ्यात् न इत्यभ्याह्रियते ॥

रः पथयो देवयाना अन्तरा द्यावा-
पृथिवी वियन्ति । तेषां यो अज्या-

ति दुः-इतानि । विश्वा । [9]ये । चत्वारः । पथयः ।
देवयाना इति देव-यानाः । अन्तरा । द्यावापृथि-
वी इति द्यावा-पृथिवी । वियन्तीति वि-यन्ति ।
तेषाम् । यः । अज्यानिम् । अजीतिम् । आवहा-

[9]अथ द्वितीया—ये चत्वार इति ॥ देवयाना देवैः प्राप्यन्ते यैः तादृशाः ये चत्वारः पथयः पन्थानः । छान्दसो नलोपः । द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये । 'अन्तराऽन्तरेण' इति द्वितीया, 'दिवो द्यावा' इति द्यावादेशः 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । वियन्ति विविधं गच्छन्ति । 'यद्वृत्तान्नित्यम्' इति निघाते प्रतिषिद्धे 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम् । केचिदाहुः—चत्वार आश्रमाः गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थमिति चत्वारः पन्थान उच्यन्त इति । अन्य आहुः—देवपितृमनुष्ययानस्थानमार्गास्त्रयः ब्रह्मलोकमार्ग एक इति, चत्वारो मार्गा इति । तेषां मार्गाणां सामर्थ्यात् तैर्मार्गैर्गच्छतामस्माकं; यथा लोके अनुपद्रवोऽयं पन्था इत्युक्तौ गन्तॄणामेवानुपद्रवो गम्यते । अज्यानिं अनुपक्षयम् । 'ग्लाम्लाज्याहाभ्यो निः' इति निः । अजीतिं अपराभवं शत्रूणामजितत्वम् । जयतेः छान्दसं दीर्घत्वम् । य आवहात् मर्यादया वहति नयति । लेट्याडागमः । हे देवाः सर्वेऽपि यूयं कस्मै देवाय नः अस्मान् परिदत्त रक्षार्थं

निमर्जीतिमावहात्तस्मै नो देवाः ॥ ६ ॥ परि दत्तेह सर्वे । ग्रीष्मो हेमन्त उत नो वसन्तश्शरद्वर्षाः स्सुवितं नो अस्तु । तेषामृतूना॰

दिस्यां—वहात् । तस्मै । नः । देवाः ॥ ६ ॥ परीति । दत्त । इह । सर्वे । [10]ग्रीष्मः । हेमन्तः । उत । नः । वसन्तः । शरत् । वर्षाः । सुवितम् । नः । अस्तु । तेषाम् । ऋतूनाम् । शतशारदाना-

दत्त । यथा सोऽस्मान् रक्षति तथा सर्वेऽपि यूयं अनुजानीत इह अस्मिन्कर्मणि । निमित्तात् सप्तमी । अनेन कर्मणा हेतुनेति यावत् ॥

[10]अथ तृतीया—ग्रीष्मो हेमन्त इति ॥ हेमन्तग्रहणेन शिशिरस्यापि ग्रहणं, तयोरेकत्वात् 'पञ्च वा ऋतवः'* इति । यथा एते ग्रीष्मादयः अस्माकं सुवितं शोभनगतिहेतवः सूतिहेतवो वा भवन्तु । प्रत्येकविवक्षया एकवचनम् । क्रमविशेषाश्रयणे कारणं चिन्त्यम् । शोभनमितं सुवितं शोभना गतिः । तन्वादित्वादुवङ् । विनादित्वादनवग्रहः । पक्षान्तरे छान्दस इडागमः । किञ्च—शतशारदानां तेषामृतूनां शतसंवत्सराणां शतसंवत्सरसम्बन्धिनाम् । शरच्छब्दात् संवत्सरवचनात् स्वार्थिकोण् । यद्वा—शरदि संवत्सरे भवाः परिवत्सरादयः शारदाः । तेन बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । निवाते वातरहिते अभये भया-

*सं. ७-२-६.

शतशारदानां निवात एषामभये स्याम । इदुवथ्सराय परिवत्सराय संवथ्सराय कृणुता बृहन्नमः । तेषां

मिति शत-शारदानाम् । निवात इति नि-वाते । एषाम् । अभये । स्याम ।[11]इदुवत्सरायेतीदु-वत्सराय । परिवत्सरायेति परि-वत्सराय । संवत्सरायेति सं-वत्सराय । कृणुत । बृहत् । नमः । तेषाम् । वयम् । सुमताविति सु-मतौ । यज्ञिया-

भावे स्याम एधि कृतं [अविकृतं] यदभयं भवति निवृत्ति यत्र वातोपि स्पन्दितुं न शक्नोति तत्र वयं स्याम वर्तेमहि । 'नेरनिधाने' इति निवाते उत्तरपदान्तोदात्तत्वम् । अभये अव्ययपूर्वपदप्रकृतिस्वरत्वम्, एषामित्यन्वादेशोनुदात्तः ॥

[11]अथ चतुर्थी—इदुवत्सरायेति ॥ इदुवत्सरस्तृतीयः । परिवत्सरो द्वितीयः । संवत्सरो वर्तमानः । अत्र द्वितीयतृतीययोः 'संपरिपूर्वाच्च' इति सरच्प्रत्ययः । अत्रोपपदविधानात् । कृदुत्तरपदप्रकृतिस्वरत्वम् । अथवा—इद्वत्सरशब्दे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अत्र व्यत्ययेन 'नञ् कुनिपातानाम्' इति वचनात् अव्ययपूर्वपदप्रकृतिस्वराभावे सामासान्तोदात्तत्वमेव । एभ्यो बृहन्नमः नमस्कारं कृणुत कुरुत । 'धिन्विकृण्व्योरच्च' इत्युप्रत्ययः 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । किं प्रयोजनमित्याह—तेषामिति । यथा तेषां यज्ञियानां यज्ञसंपादना-

वयꣳ सुमतौ यज्ञियानां ज्योगजीता अहंतास्स्याम। भद्रान्नश्श्रेयस्समनैष्ट देवास्त्वयाऽवसेन समशीमहि त्वा। स नो मयोभूः पितो॥७॥ आ वि-

नाम्। ज्योक्। अजीताः। अहंताः। स्याम।
[12] भद्रात्। नः। श्रेयः। समिति। अनैष्ट। देवाः। त्वया। अवसेन। समिति। अशीमहि। त्वा। सः। नः। मयोभूरिति मयः—भूः। पितो इति॥

---

र्हाणां सुमतौ शोभनमतौ अनुग्रहे वयं स्याम पात्रं भवेम तथा नमस्कुरुतेति। अनुग्रहफलं दर्शयति—ज्योगजीता इति। केनचिदप्यपक्षपिता अहताः अनुपहिंसिता यथा भवेम तथा तेषां सुमतौ स्याम इति। सुमतौ 'नञ् सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्॥

[12] अथ पञ्चमी—भद्रादिति॥ हे देवाः भद्रात् कल्याणात् अस्माद्वर्तमानात् श्रेयः प्रशस्यतरं भद्रं अस्मभ्यं समनैष्ट सम्यङ्नयत। छान्दसो लुङ्। हे सोम त्वया अवसेन रक्ष्येण भक्ष्यमाणेन यथा त्वां समशीमहि सम्यग्व्याप्नुयामः पुनःपुनः तव भ्रातारः स्याम 'बहुलं छन्दसि' इति अश्नोतेः शपो लुक्। अत्राव्यसश्रुतेः सोम आमन्त्र्यत इति गम्यते। स त्वं हे पितो अन्नभूतः मयोभूः मयसस्सुखस्य भावयिता स नः अस्मानाविशस्व अस्माकं शरीरं प्रविश। व्यत्ययेनात्मनेपदम्। तोकाय शं

शस्व शं तोकाय तनुवे स्योनः ।
अज्यानीरेता उप दधात्येता वै दे-
वता अपराजितास्ता एव प्र विश-
ति नैव जीयते ब्रह्मवादिनो वद-
न्ति यदर्धमासा मासा ऋतवस्संध-

७ ॥ एति । विशस्व । शम् । तोकाय । तनुवे ।
स्योनः । [13]अज्यानीः । एताः । उपेति । दधाति ।
एताः । वै । देवताः । अपराजिता इत्यपरा–जि-
ताः । ताः । एव । प्रेति । विशति । न । एव ।
जीयते । [14]ब्रह्मवादिन इति ब्रह्म–वादिनः । वद-
न्ति । यत् । अर्धमासा इत्यर्ध–मासाः । मासाः ।

दुःखशान्तिहेतुः । अपत्याय तनुवे अरमच्छरीराय च स्योनः सुखो भूत्वा अस्मानाविशेति ॥

[13]अथास्य ब्राह्मणम्—अज्यानीः इत्यादि ॥ 'तेषां धो अज्यानि'* इति लिङ्गसमवायात् पञ्चाप्यज्यानय उच्यन्ते । एता इति । एते इन्द्रादयः केनचिदप्यपराजिताः । ता एवेति । तासामुपधाता ता एवानुप्रविश्य तद्भावापन्नः केन चिदपि न जीयते ॥

[14]इदानीमाग्रयणे अज्यानिहोमविधानार्थमाह—ब्रह्मवादिन इत्यादि ॥ अर्धमासादय ओषधीनां पाकहेतवः । अथ कस्मात्कारणात् अन्याभ्यः इन्द्राग्न्यादिभ्यः आग्रयणं हविर्निरुप्यत इति

*सं. ५-७-२१.

ध्सर ओषधीः पचन्त्यथ कस्माद-
न्याभ्यो देवताभ्य आग्रयणं निरुप्य-
त इत्येता हि तद्देवता उदजयन्
यदृतुभ्यो निर्वपेद्देवताभ्यस्समदं द-
ध्यादाग्रयणं निरुप्यैता आहुतीर्जु-

ऋतवः । संवत्सर इति सं-वत्सरः । ओषधीः । पचन्ति । अथ । कस्मात् । अन्याभ्यः । देवताभ्यः । आग्रयणम् । निरिति । उप्यते । इति । एताः । हि । तत् । देवताः । उदजयन्नित्युत्-अजयन् । यत् । ऋतुभ्य इत्यृतु-भ्यः । निर्वपेदिति निः-वपेत् । देवताभ्यः । समदमिति स-मदम् । दध्यात् । आग्रयणम् । निरुप्येति निः-उप्य । ए-

ब्रह्मवादिभिः पर्यनुयोगमाहुः । अत्रोत्तरं केचिद्ब्रुवते—एता हीति । इन्द्राग्न्यादयो देवताः तत् तदा उदजयन् । 'सुपां सुलुक्' इति । 'देवा वा ओषधीष्वाजिमयुः । ता इन्द्राग्नी उदजयताम्'* इति । तस्मादेतासां देवानां स्वभूता ओषधयः । अर्धमासाद-यस्तु तासां पाकमात्रे व्याप्रियन्त इति । एवं स्थिते यदृतुभ्यो निर्वपेत् आग्रयणं देवताभ्यस्समदं कलहं दध्यात् उत्पादयेत् । यथाऽन्यस्यान्यस्मै दानं कलहमुत्पादयति । तस्मादिन्द्राग्न्यादिभ्य

*ब्रा. १-६-१,

होत्यर्धमासानेव मासानृतून्थ्संवं-
थ्सरं प्रीणाति न देवताभ्यस्समर्दं
दधाति भद्रान्नश्श्रेयस्समनैष्ट देवा
इत्याह हुताद्याय यजमानस्यापरा-
भावाय ॥ ८ ॥

ताः । आहुतीरित्या-हुतीः । जुहोति । अर्धमा-
सानित्यर्ध-मासान् । एव । मासान् । ऋतून् । सं-
वत्सरमिति सं-वत्सरम् । प्रीणाति । न । देवता-
भ्यः । समर्दमिति स-मर्दम् । दधाति । [15]भद्रात् ।
नः । श्रेयः । समिति । अनैष्ट । देवाः । इति ।
आह । हुताद्यायेति हुत-अद्याय । यजमानस्य ।

एव आग्रयणं निर्वपेदिति गम्यते । एवमिन्द्राग्न्यादिभ्य आग्रयणं निरुप्य एता अज्यानीराहुतीर्जुहोति अर्धमासादीनां तृप्त्यर्थमिति विधिर्गम्यते । तदेवाह—अर्धमासानित्यादिना । न देवताभ्य इति । आत्मीयेन हविषा तृप्तत्वात् । अग्रस्यायनमिति 'पूर्वपदात्संज्ञायाम्' इति णत्वम्, शकन्ध्वादित्वात्पररूपत्वम् । सान्नाय्यानुजावरादिना स्वार्थिकोण् । सह माद्यन्त्यस्यामिति समत्संग्रामः ॥

[15]भद्रान्न इति ॥ मन्त्रपदव्याख्या । हुतादनं हुताद्यम् । छान्दसो भावे यत्, कृदुत्तरपदप्रकृतिस्वरत्वम् । 'यतोऽनावः'

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः । यो नः पुरस्ताद्दक्षिण-
अपराभावायेत्यपरा-भावाय ॥ ८ ॥

प्राजापत्यां लोकायं देवाः पितो दध्यादाग्र-
यणं पञ्चविंशतिश्च ॥ २ ॥

[1] इन्द्रस्य । वज्रः । असि । वार्त्रघ्न इति वार्त्र-घ्नः । तनूपा इति तनू-पाः । नः । प्रतिस्पश इ-

इत्याद्युदात्तत्वम् । यजमानभागभक्षणविधिर्गम्यते, 'त्वयाऽवसेन'* इति मन्त्रलिङ्गात् अपराभावाय तद्भवतीति ॥

इति पञ्चमे सप्तमे द्वितीयोऽनुवाकः.

[1] वज्रिणीरुपदधाति—इन्द्रस्य वज्रोसीति ॥ अयमेव मन्त्रः प्रतिदिशं पुरस्ताद्दक्षिणतः पश्चादुत्तरत इति । दिशिदिशि विशेषः 'यो नः पुरस्तादभिदासति' 'यो नो दक्षिणतोभिदासति' इत्यादि । तेनैताश्चतस्रः पथ्याः, 'तृतीयश्चेद्द्वादशाक्षरः पथ्या' इति हि इष्टके इन्द्रस्य वज्रोसि । व्याख्यातम्† । स त्वं नोस्माकं तनूपाश्शरीरस्य रक्षिता । पातेर्विच् । भवेति शेषः । यद्वा—असीति सम्बध्यते । इन्द्रस्य वज्रोसीति वृत्रहननसाधनं अस्माकं त्वं तनूपा इति प्रतिस्पशः बाधितॄणां बाधिता प्रतीपं बाधकः । स्पश बाधने, पचाद्यच् । वज्रापेक्षया पुल्लिङ्गत्वम् । यो नः पुरस्तात् पूर्वस्यां दिशि अघायुः अघं पापमिच्छन् । 'छन्दसि

*सं. ५-७-३[12]. †सं.१-८-१५.

तः पश्चादुत्तरतोऽघायुरभिदासत्येत ँ सोऽश्मानमृच्छतु । देवासुरास्संयत्ता आसन्तेऽसुरा दिग्भ्य आऽबाधन्त तान्देवा इष्वा च वज्रेण चापानुद-

न्ति प्रति-स्पशः । यः । नः । पुरस्तात् । दक्षिणतः । पश्चात् । उत्तरत इत्युत्-तरतः । अघायुरित्यघ-युः । अभिदासतीत्यभि-दासति । एतम् । सः । अश्मानम् । ऋच्छतु । [2]देवासुरा इति देव-असुराः । संयत्ता इति सं-यत्ताः । आसन् । ते । असुराः । दिग्भ्य इति दिक्-भ्यः । एति । अबाधन्त । तान् । देवाः । इष्वा । च । वज्रेण । च । अपेति । अनुदन्त । यत् । वज्रिणीः । उपदधातीत्युप-दधाति । इष्वा । च । एव । तत् । वज्रेण । च ।

परेच्छायामपि ' इति क्यच् । ' अश्वाघस्यात् ' इत्यात्वम् । ' क्याच्छन्दसि ' इत्युप्रत्ययः । अभिदासति—आभिमुख्येन उपक्षपयति । छान्दसमात्वम्, विकरणव्यत्ययश्च । यद्वा—ण्यन्ताल्लिटि ' छन्दस्युभयथा ' इति शप आर्धधातुकत्वात् णिलोपः । स एतमस्माकं व्यापकं इष्टकात्मानं वा पाषाणमृच्छतु अनुप्रविशतु वा, पाषाणीभवत्विति यावत् ॥

[2]अथ तत्रैव ब्राह्मणम्—देवासुरा इत्यादि ॥ आबाधन्त स-

न्ते यद्वज्रिणीरुपदधातिष्वां चैव तद्वज्रेण च यजमानो भ्रातृव्यानपं नुदते दिक्षूपं ॥ ९ ॥ दधाति देवपुरा एवैतास्तनूपानीः पर्यूहतेऽग्नाविष्णू सजोषसेमा वर्धन्तु वां गि-

यजमानः । भ्रातृव्यान् । अपेति । नुदते । [3]दिक्षु । उपेति ॥ ९ ॥ दधाति । देवपुरा इति देव-पुराः । एव । एताः । तनूपानीरिति तनू-पानीः । परीति । ऊहते । [4]अग्नाविष्णू इत्यग्ना-विष्णू । सजोषसेति सञ्-जोषसा । इमाः । वर्धन्तु । वाम् । गिरः । द्यु-

वंतो दिक्षु बाधितवन्तोसुराः । तानित्यादि । गतम् । यद्वज्रिणीरिति । 'इन्द्रस्य वज्रोसि' इत्येवमाद्या ॥

[3]दिक्ष्वित्यादि ॥ देवानां पुरो नगराणि देवपुराः । 'ऋक्पूरब्धूः' इत्यकारस्समासान्तः, परवल्लिङ्गता । शरीररक्षार्था देवपुरा एव पर्यूहते सर्वासु दिक्षु प्रतिष्ठापयति यद्दिक्षु वज्रिणीरुपदधाति ॥

[4]अथ वसोर्धाराहोमविशेषाविधित्सया पुनरपि विवित्सन् तन्मन्त्राग्रगतामृचं स्तोतुं पुनः पठति—अग्नाविष्णू इति ॥ व्याख्यातेयं चतुर्थे* । अग्नाविष्णू समानप्रीतिकौ युवां अस्मदीया गिरो वर्धयन्तु । युवामपि द्युम्नैः धनैः दीप्तिमद्भिर्वा अन्नैश्च अस्मभ्यं देयैस्समागच्छतमिति ॥

*सं. ४-७-१.

रः। द्युम्नैर्वाजेभिरा गतम्। ब्रह्मवादिनो वदन्ति यन्न देवतायै जुह्वत्यथ किंदेवत्या वसोर्धारेत्यग्निर्वसुस्तस्यैषा धारा विष्णुर्वसुस्तस्यैषा धाराऽऽग्नावैष्णव्यर्चा वसोर्धारां जुहो-

म्नैः। वाजेभिः। एति। गतम्। [5]ब्रह्मवादिन इति ब्रह्म-वादिनः। वदन्ति। यत्। न। देवतायै। जुह्वति। अथ। किंदेवत्येति किं-देवत्या। वसोः। धारा। इति। अग्निः। वसुः। तस्य। एषा। धारा। विष्णुः। वसुः। तस्य। एषा। धारा। आग्नावैष्णव्येत्याग्ना-वैष्णव्या। ऋचा। वसोः। धाराम्। जुहोति। भागधेयेनेति भाग-धेयेन। एव। एनौ।

[5]ब्रह्मवादिन इत्यादि ॥ इयं वसोर्धारा कस्यैचिद्देवतायै न हूयते। 'वाजश्च मे'* इत्यादौ देवताया अनिर्देशादियं किंदेवत्येति पर्यनुयोगं वदन्ति ब्रह्मवादिनः। जुह्वतीत्यत्र 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। कस्यै देवतायै इयम्। 'देवतान्तात्तादर्थ्ये यत्'। तत्रोत्तरं—अग्निरित्यादि। वासहेतुः प्रजानां वसुः अग्निर्विष्णुश्च। तस्माद्वसोर्धारेतिनामधेया देवता गम्यत इति। तस्मादाग्नावैष्णव्या 'अग्नाविष्णू'* इत्येतयर्चा होमात् ते एव देवते भागधेयेन प्रीणाति। अथो अपि च एतामाहुतिं

*सं. ४-७-१.

ति भागधेयेनैवैनौ समर्धयत्यथो ए-
ताम् ॥ १० ॥ एवाहुतिमायतनव-
तीं करोति यत्काम एनां जुहोति
तदेवाव रुन्धे रुद्रो वा एष यदग्नि-
स्तस्यैते तनुवौ घोराऽन्या शिवाऽ-
न्या यच्छतरुद्रीयं जुहोति यैवास्य
घोरा तनूस्तां तेन शमयति यद्वसो-

समिति । अर्धयति । अथो इति । एताम् ॥१०॥
एव । आहुतिमित्या—हुतिम् । आयतनवतीमित्या-
यतन—वतीम् । करोति । यत्काम इति यत्—का-
मः । एनाम् । जुहोति । तत् । एव । अवेति । रु-
न्धे । रुद्रः । वै । एषः । यत् । अग्निः । तस्य ।
एते इति । तनुवौ । घोरा । अन्या । शिवा । अन्या ।
यत् । शतरुद्रीयमिति शत—रुद्रीयम् । जुहोति ।
या । एव । अस्य । घोरा । तनूः । ताम् । तेन ।

आयतनवतीं करोति न परदेवतावतीमिति । अन्यथा 'च मे च मे'* इति निगद्य हूयमानेयं कुत्र तिष्ठेत् । तस्मात् यत्कामः यज्जातिकं कामयमान एनां जुहोति देवतालाभात् स्थानलाभात् । 'शीलिकामि' इत्यादिना णः, पूर्वपदप्रकृतिस्वरत्वं च ॥

रुद्रो वा इत्यादि ॥ घोरां क्रुद्धां देवस्य तनुं शतरुद्रीयेण

*सं. ४-७-१.

धारां जुहोति यैवास्य शिवा तनूस्तां तेन प्रीणाति यो वै वसोर्धारायै ॥ ११ ॥ प्रतिष्ठां वेद प्रत्येव तिष्ठति यदाज्यमुच्छिष्येत तस्मिन्ब्रह्मौदनं पचेत्तं ब्राह्मणाश्चत्वारः प्राश्नीयुरेष वा अग्निर्वैश्वानरो यद्ब्राह्मण एषा खलु वा अग्नेः प्रिया तनूर्यद्वैश्वा-

शमयति । यत् । वसोः । धाराम् । जुहोति । या । एव । अस्य । शिवा । तनूः । ताम् । तेन । प्रीणाति । यः । वै । वसोः । धारायै ॥ ११ ॥ प्रतिष्ठामिति प्रति-स्थाम् । वेद । प्रतीति । एव । तिष्ठति । [7]यत् । आज्यम् । उच्छिष्येतेत्युत्-शिष्येत । तस्मिन् । ब्रह्मौदनमिति ब्रह्म-ओदनम् । पचेत् । तम् । ब्राह्मणाः । चत्वारः । प्रेति । अश्नीयुः । एषः । वै । अग्निः । वैश्वानरः । यत् । ब्राह्मणः । एषा । खलु । वै । अग्नेः । प्रिया । तनूः । यत् । वैश्वानरः ।

---

'नमस्ते रुद्र मन्यवे '* इत्येतेन शमयति शिवां, प्रागेव शान्तां तनुं वसोर्धारया प्रीणयतीति । यो वा इत्यादि । गतम् ॥

[7]उच्छिष्येत अतिरिच्येत ब्राह्मणेभ्यो देयमोदनं ब्रह्मौदनम् । प्रियायामेवेति । अग्नेः प्रियशरीरभूते वैश्वानरात्मनि ब्राह्मण इ-

---

*सं. ४-५-१.

नरः प्रियायामेवैनां तनुवां प्रतिष्ठा-
पयति चतस्रो धेनूर्दद्यात्ताभिरेव य-
जमानोऽमुष्मिन्लोकेऽग्निं दुहे ॥ १२ ॥
चित्तिं जुहोमि मनसा घृतेनेत्या-

प्रियायाम् । एव । एनाम् । तनुवाम् । प्रतीति । स्थापयति । चतस्रः । धेनूः । दद्यात् । ताभिः । एव । यजमानः । अमुष्मिन् । लोके । अग्निम् । दुहे ॥ १२ ॥

उपैतां धारायै षट्चत्वारिंशच्च ॥ ३ ॥

[1]चित्तिम् । जुहोमि । मनसा । घृतेन । इति ।

---

स्यर्थः । तत्रेयमाहुतिः प्रतिष्ठाप्यते यत् ब्राह्मणा ब्रह्मौदनं प्राश्नन्ति इयं वै वसोर्धारा प्रतिष्ठेति ॥

[8]चतस्र इति ॥ भुक्तवद्भ्यो ब्राह्मणेभ्यः । ताभिरेवेति । ताभिः धेनुभिः वत्सस्थानीयाभिः अमुष्मिन् लोके भोगस्थाने अग्निं दुहे गोस्थानीयं दुग्धे कामान् दुहे । 'लोपस्त आत्मनेपदेषु' इति. तल्लोपः ॥

इति पञ्चमे सप्तमे तृतीयोनुवाकः.

---

[1]चित्तिं जुहोमीति ॥ 'चित्तिं जुहोमि'* इत्यनया ऋचा या वैश्वकर्मणि स्वयमातृण्णायां होतव्येति पूर्वमुक्ता एषाऽऽहुतिरदाभ्यानाम

*सं. ५-५-४.

ह्यदाभ्या वै नामैषाऽऽहुतिर्वैश्वकर्म-
णी नैनं चिक्यानं भ्रातृव्यो दभ्नो-
त्यथो देवता एवाव रुन्धेऽग्ने तम-
द्येति पङ्क्त्या जुहोति पङ्क्त्याऽऽहुत्या

आह । अदाभ्या । वै । नाम । एषा । आहुतिरि-
त्या-हुतिः । वैश्वकर्मणीति वैश्व-कर्मणी । न ।
एनम् । चिक्यानम् । भ्रातृव्यः । दभ्नोति । अथो
इति । देवताः । एव । अवेति । रुन्धे । [2]अग्ने ।
तम् । अद्य । इति । पङ्क्त्या । जुहोति । पङ्क्त्या ।
आहुत्येत्या-हुत्या । यज्ञमुखमिति यज्ञ-मुखम् ।

---

वेदितव्या। इदानीं नामधेयानि ब्रूते । नैनमिति । एतदाहुतिविशिष्टमग्निं चिक्यानं चितवन्तं यजमानं भ्रातृव्यं शत्रुं न दभ्नोति नाभिभवति ; तस्मात् दभ्यन्ते नम्यन्ते अनयेति करणे कृत्यः 'दभेश्चेति-वक्तव्यम्' इति । दम्भिः प्रकृत्यन्तरमस्तीत्याहुः । अथो अग्निं च देवता अवरुन्धे च 'यथा देवा इहागमन्'* इति मन्त्रलिङ्गात् । चिनोतेः लिटः कानच्, 'विभाषाचेः' इति कुत्वम् ॥

[2]'अग्ने तमद्य'† इत्यक्षरपङ्क्त्या होमः कर्तव्यः । उक्तं तस्याः पङ्क्तित्वमत्र स्तूयते । प्रयोजनं चेते........पाङ्क्तत्वाद्यज्ञस्य पङ्क्त्याऽनयाऽऽहुतिकरणेन हेतुना यज्ञमुखमुपक्रममारभत इति । आरभ्य यज्ञत्वमस्य क्रियत इति ॥

---

*सं. ५-५-४. †सं. ४-४-४.

यज्ञमुखमारभते सप्त ते अग्ने स-
मिधस्सप्त जिह्वा इत्याह होत्रा ए-
वाव रुन्धेऽग्निर्देवेभ्योपाक्रामद्भाग-
धेयम् ॥ १३ ॥ इच्छमानस्तस्मा ए-
तद्भागधेयं प्रायच्छन्नेतद्वा अग्नेरग्नि-
होत्रमेतर्हि खलु वा एष जातो य-

एति । रभते । [3]सप्त । ते । अग्ने । सामिध इति सं-इधः । सप्त । जिह्वाः । इति । आह । होत्राः । एव । अवेति । रुन्धे । [4]अग्निः । देवेभ्यः । अपेति । अक्रामत् । भागधेयमिति भाग-धेयम् ॥ १३ ॥ इच्छमानः । तस्मै । एतत् । भागधेयमिति भाग-धेयम् । प्रेति । अयच्छन् । एतत् । वै । अग्नेः । अग्निहोत्रमित्यग्नि-होत्रम् । एतर्हि । खलु ।

[3]सप्त त इत्यादि ॥ 'सप्त ते अग्ने'* इत्यनया अग्निहोत्रहोमः कर्तव्यः । तत्प्रयोजनं होतॄणामृत्विजां लोलः सप्तहोत्र इति लिङ्गात् ॥

[4]अग्निर्देवेभ्य इति ॥ गतमेतत्† । एतद्वा इति । यस्मादेवं तस्मादेतमग्निहोत्रमग्नेरेव स्वं देवैस्तथा कृतत्वात् । एतर्हीत्यादि । अस्मिन्काले एषोऽग्निर्जातो भवति । यर्हि यदा सर्वश्रितो भवति । तस्माज्जातायान्नप्रदानसममिदमग्निहोत्रमिति । स एनमित्यादि । गतम् ॥

*सं. ४-६-५. †सं. ५-४-७.

रहि सर्वश्चितो जातायैवास्मा अन्न-
मपि दधाति स एनं प्रीतः प्रीणाति
वसीयान्भवति ब्रह्मवादिनो वदन्ति
यदेष गार्हपत्यश्चीयतेऽथ क्वास्याह-
वनीय इत्यसावादित्य इति ब्रूया-
देतस्मिन् हि सर्वाभ्यो देवताभ्यो

वै । एषः । जातः । यर्हि । सर्वः । चितः । जा-
ताय । एव । अस्मै । अन्नम् । अपीति । दधाति ।
सः । एनम् । प्रीतः । प्रीणाति । वसीयान् । भव-
ति । ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति ।
यत् । एषः । गार्हपत्य इति गार्ह—पत्यः । चीय-
ते । अथ । क्व । अस्य । आहवनीय इत्या—हवनी-
यः । इति । असौ । आदित्यः । इति । ब्रूयात् । एत-

ब्रह्मवादिन इत्यादि ॥ यत् यद्येवमेष गार्हपत्यश्चीयते अग्ने-रेव होमात् अथेदानीं क्वास्य भवति यः यत्र देवताभ्यो हूयत इति ब्रह्मवादिन आहुः । अत्रोत्तरमित्थं ब्रूयादित्याह—असावादित्य इति । अथाहवनीयत्वं समर्थयते—एतस्मिन्हीति । यत् सर्वाभ्यो देवताभ्यः हुतं तदेतस्मिन् तिष्ठतीति । यथा—अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते इति । तस्मात्स एवाहवनीयो भवतीति । य एवमित्यादि । गतम् ॥

जुहोति ॥ १४ ॥ य एवं विद्वानग्निं चिनुते साक्षादेव देवता ऋध्नोत्यग्ने यशस्विन् यशसेममर्पयेन्द्रावतीमपचितीमिहा वह। अयं मूर्धा परमेष्ठी सुवर्चाः समानानामुत्तमश्लोको

स्मिन्न्। हि। सर्वाभ्यः। देवताभ्यः। जुहोति॥१४॥ यः। एवम्। विद्वान्। अग्निम्। चिनुते। साक्षादिति स-अक्षात्। एव। देवताः। ऋध्नोति। [6]अग्ने। यशस्विन्न्। यशसा। इमम्। अर्पय। इन्द्रावतीमितीन्द्र-वतीम्। अपचितीमित्यप-चितीम्। इह। एति। वह। अयम्। मूर्धा। परमेष्ठी। सुवर्चा इति सु-वर्चाः। समानानाम्। उत्तमश्लोक इत्युत्तम-

[6]अथ राष्ट्रभृत उपदधाति—अग्ने यशस्विन्नित्याद्याश्चतस्रः सर्वाः त्रिष्टुभः, प्रथमा जगती वा ॥ तत्र प्रथमा—हे अग्ने यशस्विन् इमं यजमानं यशसा अर्पय प्रापय। 'नामन्त्रिते समानाधिकरणे' इति पूर्वस्यामन्त्रितस्य अविद्यमानत्वाभावः। इन्द्रावतीं इन्द्रयोग्यां अपचितीं पूजां इह अस्मिन्कर्मणि आवह आनय इन्द्रयोग्यां पूजां यथाऽयं समर्थस्स्यात् तथा कुर्वित्यर्थः। उभयत्रापि वर्णव्यत्ययेन दीर्घत्वम्। किमर्थमित्याह—अयं यजमानः मूर्धा प्रधानभूतः परमे महिम्नि स्थितः। उणादिषु निपात्यते। सुवर्चाः शोभनदीप्तिः। 'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम्। स-

अस्तु । भद्रं पश्यन्त उपसेदुरग्रे तपो दीक्षामृषयस्सुवर्विदः । ततः क्षत्रं बलमोजश्च जातं तदस्मै देवा अभि सं नमन्तु । धाता विधाता परमा ॥ १५ ॥ उत संदृक्प्रजापतिः

श्लोकः । अस्तु । [7]भद्रम् । पश्यन्तः । उपेति । सेदुः । अग्रे । तपः । दीक्षाम् । ऋषयः । सुवर्विद इति सुवः—विदः । ततः । क्षत्रम् । बलम् । ओजः । च । जातम् । तत् । अस्मै । देवाः । अभि । समिति । नमन्तु । [8]धाता । विधातेति वि—धाता । परमा ॥ १५ ॥ उत । संदृगिति सं—दृक । प्रजापतिरिति प्रजा—पतिः ।

मानानां समानजातानां मध्ये उत्तमश्लोकः उत्तमकीर्तिश्चास्तु एवमर्थं इति । उत्तमशब्द उञ्छादिरन्तोदात्तः ॥

[7]अथ द्वितीया—भद्रमिति ॥ भद्रं कल्याणं फलं पश्यन्तः शास्त्रदृष्ट्या विचिन्वानाः तपश्च उपसल्लक्षणं दीक्षां चाग्रे उपसेदुः उपासाञ्चक्रिरे ऋषयः सुवर्विदः परमसुखज्ञाः । ततश्च तेषां क्षत्रं धनं बलं सामर्थ्यं ओजो दीप्तिश्च जातं भद्रं उत्पादितं तद्भद्रमस्मै यजमानाय देवा अभिसन्नमन्तु आभिमुख्येनानयन्तु ॥

[8]अथ तृतीया—धातेति ॥ धाता धारकः विधाता विधारकः परमो रक्षितः परमस्स्रष्टा उत अपि च परमात्मा संदृक्

परमेष्ठी विराजा । स्तोमाश्छन्दाꣳसि निविदो म आहुरेतस्मै राष्ट्रमभि सं नमाम । अभ्यावर्तध्वमुप मेत साकमयꣳ शास्ताऽधिपतिर्वो अस्तु । अस्य विज्ञानमनु सꣳ रभ-

परमेष्ठी । विराजेति वि—राजा । स्तोमाः । छन्दाꣳसि । निविद इति नि—विदः । मे । आहुः । एतस्मै । राष्ट्रम् । अभि । सामिति । नमाम । अभ्यावर्तध्वमित्यभि—आवर्तध्वम् । उपेति । मा । एति । इत । साकम् । अयम् । शास्ता । अधिपतिरित्य-

उत्तमो द्रष्टा अचितदर्शिः [अवितथदर्शी] परमेश्वरः प्रजापतिः हिरण्यगर्भः परमेष्ठी परमे कारणभावे स्थितः परमात्मा विराजा एकस्त्रष्टा सह स्तोमास्त्रिवृदादयः छन्दांसि गायत्र्यादीनि निविदः शस्त्राणि निविदः पदान्येव वा सर्वाण्येतानि मे आहुः । कथमेतस्मै यजमानाय राष्ट्रं पदसमूहं आभिमुख्येन संनमामेति राष्ट्रस्याभिसंनमने आभिमुख्यं भजतामित्यर्थः ॥

अथ चतुर्थी—अभ्यावर्तध्वमिति ॥ मनुष्या उच्यन्ते । अभ्यावर्तध्वं आभिमुख्येनास्माकमागच्छतम् । उपरक्ताः परागच्छत । 'गतिर्गतौ' इति प्रथमो गतिः अनुदात्तः । तेन पृथक् पदत्वाभावः । सर्वेऽपि साकं सम्भूय ऐकमत्यं गता मामुपेत उपगच्छत । धातूपसर्गसंयोगे कृते 'ओमाङोश्च' इति पररूपत्वम् । इदमुच्यध्वे—वः युष्माकं अयं यजमानः शास्ता अधिपतिश्चास्तु । 'प्रसितस्कभित' इत्यादौ शास्तेति इडभावो निपात्यते । इदं

ध्वमिमं पश्चादनु जीवाथ सर्वे ।
राष्ट्रभृत एता उप दधात्येषा वा
अग्नेश्चिती राष्ट्रभृत्तयैवास्मिन्राष्ट्रं द-
धाति राष्ट्रमेव भवति नास्माद्राष्ट्रं
भ्रंशते ॥ १६ ॥

धिं-पतिः । वः । अस्तु । अस्य । विज्ञानमिति वि-ज्ञानम् । अनु । सामिति । रभध्वम् । इमम् । पश्चात् । अन्विति । जीवाथ । सर्वे । [10]राष्ट्रभृत इति राष्ट्र-भृतः । एताः । उपेति । दधाति । एषा । वै । अग्नेः । चितिः । राष्ट्रभृदिति राष्ट्र-भृत् । तया । एव । अस्मिन् । राष्ट्रम् । दधाति । राष्ट्रम् । एव । भवति । न । अस्मात् । राष्ट्रम् । भ्रंशते ॥ १६ ॥
भागधेयं जुह्वति परमा राष्ट्रं दधाति सप्त च ॥ ४ ॥

चाप्युच्यत्वे—अयमप्यस्य यजमानस्य विज्ञानमनुसंरभध्वं यथाऽनेन विज्ञातं तथाऽनुसरन्तः कर्माण्यारभध्वम् । पश्चादिमं जीवन्तमनुजीवाथ सर्वेऽपि यद्ययं जीवति ततो यूयं जीवथ । तस्मादिमं जीवन्त मनुजीवतेति । लेट्याडागमः ॥

[10]अथासां ब्राह्मणम्—राष्ट्रभृत इत्यादि ॥ एषेति । एषा राष्ट्रमेवेति विधेयीकृतराष्ट्रतां दर्शयितुं ताच्छब्द्यम् । तदारभ्य नास्मात् राष्ट्रं भ्रंशत इति ॥

इति पञ्चमे सप्तमे चतुर्थोनुवाकः.

यथा वै पुत्रो जातो म्रियत एवं वा एष म्रियते यस्याग्निरुख्यं उद्वायति यन्निर्मन्थ्यं कुर्याद्विच्छिन्द्याद्भ्रातृव्यमस्मै जनयेत्स एव पुनः परीध्यस्स्वादेवैनं योनेर्जनयति नास्मै भ्रा-

[1]यथा । वै । पुत्रः । जातः । म्रियते । एवम् । वै । एषः । म्रियते । यस्य । अग्निः । उख्यः । उद्वायतीत्युत्–वायति । [2]यत् । निर्मन्थ्यमिति निः–मन्थ्यम् । कुर्यात् । वीति । छिन्द्यात् । भ्रातृव्यम् । अस्मै । जनयेत् । सः । एव । पुनः । परीध्य इति परि–इध्यः । स्वात् । एव । एनम् ।

[1]यथा वै पुत्र इत्यादि ॥ यथा जातः परिनिष्पन्नः पुत्रो महादुःखहेतुर्म्रियते एवं महादुःखहेतुरेष उख्यो म्रियते गम्यते म्रियमाण इव दुःखहेतुत्वाज्जात इत्युच्यते । कस्य दुःखहेतुरित्याह— यस्येति । तस्मात्तदवधानेन रक्ष्य इति । पै ओ वै शोषणे॥

[2]इदानीं प्रमादादनुगते प्रायश्चित्तमाह— यदि निर्मन्थ्येदग्निं विच्छिन्द्यात् पूर्वमन्यस्य परिग्रहात् भ्रातृव्यं च यजमानस्य जनयेत्; स एव पूर्वोत्पादित उख्यः परीध्यः । किमुक्तं भवति— यथा पूर्वमुत्पादितं तथैवोत्पाद्य परीध्यः प्रवर्ध्य इत्यर्थः । ततश्च स्वादेव योनेः पूर्वस्मात्कारणात् उखाया आहवनीयाच्च

तृव्यं जनयति तमो वा एतं गृह्णा-
ति यस्याग्निरुख्यं उद्वायति मृत्यु-
स्तमः कृष्णं वासः कृष्णा धेनुर्द-
क्षिणा तमसा ॥ १७ ॥ एव तमो
मृत्युमप हते हिरण्यं ददाति ज्यो-
तिर्वै हिरण्यं ज्योतिषैव तमोप ह-
तेऽथो तेजो वै हिरण्यं तेज एवा-

योनेः । जनयति । न । अस्मै । भ्रातृव्यम् । ज-
नयति । [3]तमः । वै । एतम् । गृह्णाति । यस्य ।
अग्निः । उख्यः । उद्वायतीत्युत्-वायति । मृत्युः ।
तमः । कृष्णम् । वासः । कृष्णा । धेनुः । दक्षि-
णा । तमसा ॥ १७ ॥ एव । तमः । मृत्युम् । अ-
पेति । हते । हिरण्यम् । ददाति । ज्योतिः । वै ।
हिरण्यम् । ज्योतिषा । एव । तमः । अपेति । हते ।
अथो इति । तेजः । वै । हिरण्यम् । तेजः । एव ।

---

एनं जनयति । ततश्च स एवायमिति विद्येत दोषाभावः । भ्रा-
तृव्यं च यजमानस्य न जनयेदिति ॥

[3]तमो वा इत्यादि ॥ गतम् । एतमिति । नीयमानम् । तम-
सैवेति । कृष्णधेनुदानव्याजेन मृत्युमेवापहन्तीति । ज्योति-
षैवेति । तद्विपक्षेण हिरण्येन ज्योतिषा तमोनिवारणं करोति ।

त्मंन्धत्ते सुवर्न घर्मस्स्वाहा सुवर्नार्कस्स्वाहा सुवर्न शुक्रस्स्वाहा सुवर्न ज्योतिस्स्वाहा सुवर्न सूर्यस्स्वाहाऽर्को वा एष यदग्निरसावादित्यः॥१८

अश्वमेधो यदेता आहुतीर्जुहोत्यं-

आत्मन्न्। धत्ते। [4]सुवः। न। घर्मः। स्वाहा। सुवः। न। अर्कः। स्वाहा। सुवः। न। शुक्रः। स्वाहा। सुवः। न। ज्योतिः। स्वाहा। सुवः। न। सूर्यः। स्वाहा। [5]अर्कः। वै। एषः। यत्। अग्निः। असौ। आदित्यः॥१८॥

अश्वमेध इत्यंश्व-मेधः। यत्। एताः। आहुती-

अथो अपि च तेजोरूपहिरण्यप्रदानेन तेजस्वित्वमात्मनः करोति नित्यम्॥

[4]स्रुवाहुतीरभिजुहोति उद्घातप्रायश्चित्तार्थं च—सुवर्नेत्याद्याः पञ्च॥ सुवरादित्यः स इवायं घर्मः दीप्तिशीलोग्निः तस्मै स्वाहुतमिदमस्तु। उपमार्थीयो नकारः। प्रातिशाख्ये 'कधिसुवः........पूर्वः'* इति नियमाण्णत्वाभावः। एवमुत्तरे द्रष्टव्याः। अर्कः अर्चनीयः। शुक्रः निर्मलः। ज्योतिः तेजोरूपः सूर्यः सावकः प्रेरको वा। 'राजसूयसूर्य' इत्यत्र निपात्यते॥

[5]अत्रैव ब्राह्मणम्—अर्को वा इत्यादि॥ यावेतावेतेषु जन्तुषूपमानोपमेयभूतावग्न्यादित्यौ निर्दिष्टौ तावकाश्वमेधौ। प्रशस्तशब्दा-

*७-२.

र्काश्वमेधयो रेव ज्योतीꣳषि सं दधा-
त्येष ह त्वा अर्काश्वमेधी यस्यैतदग्नौ
क्रियत आपो वा इदमग्रे सलिल-
मासीत्स एतां प्रजापतिः प्रथमां
चितिमपश्यत्तामुपाधत्त तदियमभ-

रित्या-हुतीः। जुहोति। अर्काश्वमेधयोरित्यर्क-अ-श्वमेधयोः। एव। ज्योतीꣳषि। समिति। दधाति। एषः। ह। तु। वै। अर्काश्वमेधीत्यर्क-अश्वमेधी। यस्य। एतत्। अग्नौ। क्रियते। [6]आपः। वै। इदम्। अग्रे। सलिलम्। आसीत्। सः। एताम्। प्रजापतिरिति प्रजा-पतिः। प्रथमाम्। चितिम्। अपश्यत्। ताम्। उपेति। अधत्त। तत्। इयम्। अभवत्।

---

भिधानं प्राशस्त्यार्थम्। तस्मादाभिराहुतिभिः सर्वाणि ज्योतींषि अर्काश्वमेधयोरग्न्यादित्ययोः लोकस्थित्यर्थं संदधाति। एष इत्यादि। एष वा अर्काश्वमेधी यस्यैतत् कर्म क्रियत इति पृथक् सोमविधानार्थं पुनर्वचनम्॥

[6]आपो वा इत्यादि॥ व्याख्यातम्*। इतःप्रभृति पञ्चचिति-वाक्यशेष आन्तादनुवाकस्य। स एतामित्यादि। गतम्। इयमिति। पृथिवी तं प्रजापतिं पृथिव्यां सुखमासीनं विश्वकर्मा (प्रीतिमे)

---

*सं. ५-६-४.

वृत्तं विश्वकर्माऽब्रवीदुप त्वाऽऽया-
नीति नेह लोकोऽस्तीति ॥ ११ ॥
अब्रवीत्स एतां द्वितीयां चितिमप-
श्यत्तामुपाधत्त तदन्तरिक्षमभवत्स
यज्ञः प्रजापतिमब्रवीदुप त्वाऽऽया-

तम् । विश्वकर्मेति विश्व–कर्मा । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति ॥ ११ ॥ अब्रवीत् । सः । एताम् । द्वितीयाम् । चितिम् । अपश्यत् । ताम् । उपेति । अधत्त । तत् । अन्तरिक्षम् । अभवत् । सः । यज्ञः । प्रजापतिमिति प्रजा–पतिम् । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । न । इह ।

अब्रवीत्—उप त्वाऽऽयानि त्वामुपगच्छामि इतः सलिलात् तव समीपं पृथिवीभूतमाश्रयानीति । धातूपसर्गयोरेकादेश उदात्तः । अथ प्रजापतिः विश्वकर्माणमब्रवीत्—तव लोके इह स्थानं इह मत्समीपे नास्तीति अन्तरिक्षस्य अभावात्ततस्स विश्वकर्मा स्वमहिम्ना एतां द्वितीयां चितिमपश्यत्, उपाधत्त च ताम् । तदन्तरिक्षमभवत् । स तत्र सुखमास्त । अथ यज्ञः प्रजापतिमब्रवीत्—उप त्वाऽऽयानीति । अथ प्रजापतिस्तमब्रवीत्—नेह लोकस्तवास्तीति दिशामभावात्; त्वं हि दिगधीनात्मलाभ इति । अथ प्रजापतिं मुक्त्वा यज्ञो विश्वकर्माणमब्रवीत्—उपत्वाऽऽयानीति । अथ विश्वकर्मा यज्ञमब्रवीत्—केन

नीति नेह लोकोऽस्तीत्यब्रवीथ्स वि-
श्वकर्माणमब्रवीदुप त्वाऽऽयानीति
केन मोपैष्यसीति दिश्याभिरित्य-
ब्रवीत्तं दिश्याभिरुपैत्ता उपाधत्त ता
दिशः ॥ २० ॥ अभवन्थ्स परमेष्ठी

लोकः । अस्ति । इति । अब्रवीत् । सः । विश्वक-
र्माणमिति विश्व-कर्माणम् । अब्रवीत् । उपेति ।
त्वा । एति । अयानि । इति । केन । मा । उपैष्यसी-
त्युप-ऐष्यसि । इति । [7]दिश्याभिः । इति । अब्रवीत् ।
तम् । दिश्याभिः । उपैदित्युप-ऐत् । ताः । उपेति ।
अधत्त । ताः । दिशः ॥ २० ॥ अभवन् । सः । प-

सह मामुपैष्यसि मामुपगमिष्यसीति । धातूपसर्गयोः 'एत्येध-त्यूठ्सु' इति वृद्धिः एकादेश उदात्तः, तस्यान्तादिवद्भावेन आङ्ग्रहणेन ग्रहणात् 'ओमाङोश्च' इति पररूपत्वं प्राप्तं न, व्यत्ययेन क्रियते । क्रियतां वा पररूपत्वं न कश्चिद्रूपभेदः, अन्तवद्भावेन वा एतिग्रहणेन ग्रहणात् 'एत्येधत्यूठ्सु' इति पुनरपि वृद्धिः प्रवर्तते ॥

[7]अथ यज्ञो विश्वकर्माणमब्रवीत्—दिश्याभिरिष्टकाभिः सह त्वामुपैष्यामीति ॥ दिक्शब्दवता मन्त्रेणोपधेया इष्टका दिश्याः 'राज्ञ्यसि प्राची दिक्'* इत्याद्याः । 'तद्वानासाम्' इति यत् ।

*सं. ४-४-२.

प्रजापतिमब्रवीदुप त्वाऽऽयानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणं च यज्ञं चाब्रवीदुप वामाऽऽयानीति नेह लोकोऽस्तीत्यब्रूताꣳ स एतां तृतीयां चितिमपश्यत्तामुपाधत्त तद-

रमेष्ठी । प्रजापतिमिति प्रजा-पतिम् । अब्रवीत् । उपेति । त्वा । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । अब्रवीत् । सः । विश्व-कर्माणमिति विश्व-कर्माणम् । च । यज्ञम् । च । अब्रवीत् । उपेति । वाम् । एति । अयानि । इति । न । इह । लोकः । अस्ति । इति । अब्रूताम् । सः । एताम् । तृतीयाम् । चितिम् । अपश्यत् । ताम् । उपेति । अधत्त । तत् । असौ । अभवत् ।

अथ तदनुज्ञातः यज्ञो दिश्याभिः सहोपैत् उपागच्छत् । वृद्धित्रयाद्यः, एकादेश उदात्तः, पूर्ववत्प्रथमस्य गतेरनुदात्तत्वम् । अथ ता उपाधत्त यज्ञस्ता दिशोऽभवन् । ततो दिश्याभिर्यज्ञः सुखमासत । अथ परमेष्ठी ब्रह्मा प्रजापतिं विश्वात्मानमब्रवीत्—उप त्वाऽऽयानीति । नेहेत्यब्रवीत् प्रजापतिः ऊर्ध्वलोकाभावात् । अथ परमेष्ठी विश्वकर्माणं यज्ञं चाब्रवीत् उप वामाऽऽयानीति युवामुपगच्छामीति । नेहेत्यब्रूतां तौ । स तृतीयां चितिं दृष्ट्वा उपाधत्त । स द्यौरभवत् ॥

सार्वभवथ्स आदित्यः प्रजापतिम-
ब्रवीदुप त्वा ॥ २१ ॥ आऽयानीति
नेह लोकोस्तीत्यंब्रवीथ्स विश्वकं-
र्माणं च यज्ञं चांब्रवीदुप वामाऽया-
नीति नेह लोकोस्तीत्यंब्रूताꣳ स
परमेष्ठिनमब्रवीदुप त्वाऽऽयानीति

सः । आदित्यः । प्रजापतिमिति प्रजा-पतिम् । अब्र-
वीत् । उपेति । त्वा ॥ २१ ॥ एति । अयानि ।
इति । न । इह । लोकः । अस्ति । इति । अब्रवीत् ।
सः । विश्वकर्माणमिति विश्व-कर्माणम् । च । य-
ज्ञम् । च । अब्रवीत् । उपेति । वाम् । एति । अया-
नि । इति । न । इह । लोकः । अस्ति । इति । अब्रू-
ताम् । सः । परमेष्ठिनम् । अब्रवीत् । उपेति ।
त्वा । एति । अयानि । इति । केन । मा । उपै-
ष्यसीत्युप-ऐष्यसि । इति । लोकंपृणयेति लो-

---

[8]अथादित्यः प्रजापतिमब्रवीत्—उप त्वाऽऽयानीति ॥ नेहेति सो-ब्रवीत् । स आदित्यः प्रजापतिं मुक्त्वा यज्ञं च विश्वकर्माणं चा-ब्रवीत् उप वामाऽयानीति । नेहेति तावप्यब्रूताम् । अथ परमेष्ठिनमब्र-वीत्—उप त्वाऽयानीति । अथ परमेष्ठी केन मोपैष्यसीत्यादित्यमब्र-वीत् । अथ लोकंपृणयेति सोऽब्रवीत् । उपैत् लोकंपृणया ।

केनं मोपैष्यसीति लोकंपृणयेत्यंब्र-
वीत्तं लोकंपृणयोपैत्तस्मादयातयाम्नी
लोकं पृणाऽयातयामा ह्यसौ ॥२२॥
आदित्यस्तानृषयोऽब्रुवन्नुप व आऽ-
यामेति केनं न उपैष्यथेति भूम्ने-

कं–पृणयां । इति । अब्रवीत् । तम् । लोकंपृण-
येति लोकं–पृणया । उपैदित्युप–ऐत् । [1]तस्मात् ।
अयातयाम्नीत्ययात–याम्नी । लोकंपृणेति लोकं–
पृणा । अयातयामेत्ययात–यामा । हि । असौ ॥
२२ ॥ आदित्यः । तान् । ऋषयः । अब्रुवन् । उ-
पेति । वः । एति । अयाम । इति । केनं । नः ।
उपैष्यथेत्युप–ऐष्यथ । इति । भूम्ना । इति । अ-
ब्रुवन् । तान् । द्वाभ्याम् । चितीभ्यामिति चिति–

तस्मादादित्येनानीतत्वात् अयातयाम्नी पुनःपुनरुपधीयमानाऽपि कदा-
चिदप्ययशक्तिं न प्रतिपद्यते, यथा पुनःपुनरुद्यन्नप्यादित्यः ॥

[1]अयातयाम्नीति ॥ 'अन उपधालोपिनः' इति ङीप् ।
तानित्यादि । तान् प्रजापतिविश्वकर्मयज्ञपरमेष्ठ्यादित्यान् ऋषयोऽ-
ब्रुवन् उप व आऽयामेति । केन नोऽस्मानुपैष्यथेति प्रजापत्यादयोऽब्रु-
वन् । भूम्नेत्यब्रुवन् ऋषयः । बहुत्वं भूमा वृद्धिः । 'बहो-
र्भू च बहोः' । ततस्ते द्वाभ्यां चितीभ्यामुपायन् प्रजापत्या-

त्यंब्रुवन्तान्द्वाभ्यां चितीभ्यामुपाय-
न्थ्स पञ्चचितीकस्समंपद्यत य एवं
विद्वानग्निं चिनुते भूयानेव भवत्य-
भीमाल्लोकाञ्जयति विदुरेनं देवा
अथो एतासामेव देवतानाꣳ सायु-
ज्यं गच्छति ॥ २३ ॥

भ्याम् । उपायन्नित्युंप–आयन्नं । सः । पञ्चचिती-
क इति पञ्च–चितीकः । समिति । अपद्यत ।
10यः । एवम् । विद्वान् । अग्निम् । चिनुते । भू-
यान् । एव । भवति । अभीति । इमान् । लो-
कान् । जयति । विदुः । एनम् । देवाः । अथो इ-
ति । एतासाम् । एव । देवतानाम् । सायुज्यम् ।
गच्छति ॥ २३ ॥

तमसाऽऽदित्योस्तीति दिशां आदित्यः प्रजाप-
तिमब्रवीदुपं त्वाऽसौ पञ्चचत्वारिꣳशच्च ॥५॥

दीन् सोयमग्निरेवं पञ्चचितीकस्सम्पद्यते । 'चितेः कपि' इति

10य एवमित्यादि ॥ विदुषस्स्तुतिः । भूयान् ऋद्धियुक्तः
एतासां प्रजापत्यादीनां सायुज्यं समानयोगत्वं गच्छति ॥

इति पञ्चमे सप्तमे पञ्चमः ॥

[1]वयो वा अग्निर्यदग्निचित्पक्षिणोऽश्नी-
यात्तमेवाग्निमंद्यादार्तिमार्च्छेथ्संवथ्स-
रं व्रतं चरेथ्संवथ्सरꣳ हि व्रतं नाति
[2]पशुर्वा एष यदग्निर् हिनस्ति खलु

वयः । वै । अग्निः । यत् । अग्निचिदित्यग्नि–चित् । पक्षिणः । अश्नीयात् । तम् । एव । अग्निम् । अद्यात् । आर्तिम् । एति । ऋच्छेत् । संवत्सरमिति सं–वत्सरम् । व्रतम् । चरेत् । संवत्सरमिति सं–वत्सरम् । हि । व्रतम् । न । अतीति । पशुः । वै । एषः । यत् । अग्निः । हिनस्ति । खलु । वै । तम् । पशुः । यः । एनम् । पुरस्तात् ।

[1]वयो वा इत्यादि ॥ श्येनाकारत्वात् पक्षी भवत्यग्निः । तस्माद्यदग्निचित्पक्षिणोऽश्नीयात् पक्षिणो मांसमश्नीयात् तमेवाग्निमद्यात् । तत आर्तिं गच्छेत् म्रियेत । 'उपसर्गादृतिधातौ' इति वृद्धिः । तस्मात्संवत्सरं न मांसमश्नीयादिति विधिः । यस्मात्संवत्सरविधिर्नात्येति ततस्संवत्सरादूर्ध्वमनुवर्तते । 'ससाधनां क्रियां उपसर्ग आह' इति सोपसर्गक्रियापदमध्याह्रियते । संवत्सरादर्वागेव सर्वव्रतं प्रवर्तते नाति नोर्ध्वम् ॥

[2]पशुर्वा इत्यादि ॥ लुप्तोपमेयम् । यथा पशुः प्रतिकूलकारिणमाभिमुख्येन स्थितं हिनस्ति एवमयमग्निः । यस्मादेवं तस्मात्पशुस-

वै तं पशुर्य एनं पुरस्तात्प्रत्यञ्चमुप-
चरति तस्मात्पश्चात्प्राङुपचर्य आ-
त्मनोऽहिꣳसायै तेजोऽसि तेजो मे
यच्छ पृथिवीं यच्छ ॥ २४ ॥ पृथि-
व्यै मा पाहि ज्योतिरसि ज्योतिर्मे
यच्छान्तरिक्षं यच्छान्तरिक्षान्मा पा-

प्रत्यञ्चम् । उपचरतीत्युप-चरति । तस्मात् । प-
श्चात् । प्राङ् । उपचर्य इत्युप-चर्यः । आत्मनः ।
अहिꣳसायै । [3]तेजः । असि । तेजः । मे । यच्छ ।
पृथिवीम् । यच्छ ॥ २४ ॥ पृथिव्यै । मा । पाहि ।
ज्योतिः । असि । ज्योतिः । मे । यच्छ । अन्तरिक्षम् ।
यच्छ । अन्तरिक्षात् । मा । पाहि । सुवः । असि ।

दृशोयमग्निः तमपि हिनस्ति । कं? य एनं पुरस्तात् पूर्वस्यां दिशि स्थितः प्रत्यङ्मुखः स प्रत्यञ्चं प्रतिमुखावस्थितमुपचरति आरोहणोपधानप्रोक्षणादिकमस्य करोति । तस्मात्पश्चादपरस्यां दिशि स्थितेन प्राङ्मुखोग्निः उपचर्यः उपचरितव्य इति विधिः । आत्मन एवाहिंसार्थम् । छान्दसो यत् ॥

[3]प्रथममध्यमोत्तमासु चितिषु हिरण्येष्टका उपदधाति—तेजोसीत्याद्याः ॥ तेजोसि तेजोहेतुस्त्वमसि तेजो मह्यं देहि पृथिवीं च यच्छ विधेयां कुरु । पृथिव्यै पृथिवीनिमित्तात् रोगादेः मां पाहि ।

हि सुवरसि सुवर्मे यच्छ दिवं यच्छ
दिवो मा पाहीत्याहैताभिर्वा इमे
लोका विधृता यदेता उपदधात्येषां
लोकानां विधृत्यै स्वयमातृण्णा उ-
पधायं हिरण्येष्टका उप दधातीमे वै
लोकास्स्वयमातृण्णा ज्योतिर् हि-

सुवः । मे । यच्छ । दिवम् । यच्छ । दिवः । मा । पाहि । इति । आह । एताभिः । वै । इमे । लोकाः । विधृता इति वि-धृताः । यत् । एताः । उपदधातीत्युप-दधाति । एषाम् । लोकानाम् । विधृत्या इति वि-धृत्यै । स्वयमातृण्णा इति स्वयं-आतृण्णाः । उपधायेत्युप-धाय । हिरण्येष्टका इति हिरण्य-इष्टकाः । उपेति । दधाति । इमे । वै । लोकाः । स्वयमातृण्णा इति स्वयं-आतृण्णाः । ज्यो-

---

पञ्चम्यर्थे चतुर्थी, 'उदात्तयणः' इति तस्या उदात्तत्वम् । एवमुत्तरौ व्याख्येयौ । तेजः कीर्तिः । ज्योतिः दीप्तिः । सुवस्सुखम् ॥

[4]अत्रैव ब्राह्मणम्—इत्याहेति ॥ एताभिः हिरण्येष्टकाभिः इमे लोकाः विधृताः एतासामुपधानेनेत्यर्थः ॥

रण्यं यथ्स्वयमातृण्णा उपधाय ॥
२५ ॥ हिरण्येष्टका उपदधातीमाने-
वैताभिर्लोकाञ्ज्योतिष्मतः कुरुतेऽथो
एताभिरेवास्मा इमे लोकाः प्र भा-
न्ति यास्ते अग्ने सूर्ये रुचं उद्यतो
दिवमातन्वान्ति रश्मिभिः । ताभि-

तिः । हिरण्यम् । [5]यत् । स्वयमातृण्णा इति स्व-
यं-आतृण्णाः । उपधायेत्युप-धाय ॥ २५ ॥ हि-
रण्येष्टका इति हिरण्य-इष्टकाः । उपदधातीत्युप-
दधाति । इमान् । एव । एताभिः । लोकान् ।
ज्योतिष्मतः । कुरुते । अथो इति । एताभिः । ए-
व । अस्मै । इमे । लोकाः । प्रेति । भान्ति ।
[6]याः । ते । अग्ने । सूर्ये । रुचः । उद्यत इत्युत्-
यतः । दिवम् । आतन्वन्तीत्या-तन्वन्ति । रश्मि-

[5]यदित्यादि ॥ गतम् । अथो इति । एताभिरिष्टकाभिः ज्यो-
तिष्मन्तः कृता लोका अस्मै यजमानाय प्रकर्षेण भान्ति ॥

[6]अथ तिस्रः ऋचः—यास्ते अग्ने इत्याद्याः ॥ प्रथमाद्विती-
ये 'ध्रुवाऽसि'* इत्यत्र व्याख्याते । सर्वा अनुष्टुभः प्रथमा कृति-
र्नामानुष्टुप् । तत्र प्रथमा—उद्यतस्तव सूर्ये स्थिता याः रुचः

*सं. ४-२-९.

स्सर्वाभी रुचे जनाय नस्कृधि ।
या वो देवास्सूर्ये रुचो गोष्वश्वेषु
या रुचः । इन्द्राग्नी ताभिस्सर्वाभी
रुचं नो धत्त बृहस्पते । रुचं नो धे-
हि॥ २६ ॥ ब्राह्मणेषु रुचꣳ राजसु
नस्कृधि । रुचं विश्येषु शूद्रेषु मयि

भिरिति रश्मि-भिः । ताभिः । सर्वाभिः । रुचे । जनाय । नः । कृधि । [7]याः । वः । देवाः । सूर्ये । रुचः । गोषु । अश्वेषु । याः । रुचः । इन्द्राग्नी इतीन्द्र-अग्नी । ताभिः । सर्वाभिः । रुचम् । नः । धत्त । बृहस्पते । [8]रुचम् । नः । धेहि ॥ २६ ॥ ब्राह्मणेषु । रुचम् । राजस्विति राज-सु । नः । कृधि । रुचम् । विश्येषु । शूद्रेषु । मयि । धेहि ।

---

दित्वं रश्मिभिः व्याप्तामातन्वन्ति ताभिस्सर्वाभिः रश्मिभिः नो यजमानाय दीप्तिं कुरु ॥

[7]द्वितीया—हे देवा या वः सूर्ये स्थिताः सूर्यनिबन्धना रुचः गोष्वश्वेषु या रुचः हे इन्द्राग्नी हे बृहस्पते ताभिः सर्वाभिः अस्मभ्यं रुचं धत्त ॥

[8]तृतीया—नः अस्माकं ब्राह्मणेषु रुचं धेहि स्थापय ॥

धेहि रुचा रुचम् । द्वेधा वा अग्निं चिक्यानस्य यशं इन्द्रियं गच्छत्यग्निं वा चितमीजानं वा यदेता आहुतीर्जुहोत्यात्मन्नेव यशं इन्द्रियं धत्त ईश्वरो वा एष आर्तिमार्तोर्योऽग्निं चिन्वन्नंधिक्रामंति तत्त्वा यामि ब्रह्म-

रुचा । रुचम् । [9]द्वेधा । वै । अग्निम् । चिक्यानस्यं । यशः । इन्द्रियम् । गच्छति । अग्निम् । वा । चितम् । ईजानम् । वा । यत् । एताः । आहुतीरित्या—हुतीः । जुहोति । आत्मन्न् । एव । यशः । इन्द्रियम् । धत्ते । [10]ईश्वरः । वै । एषः । आर्तिम् । आर्तोरित्या—अर्तोः । यः । अग्निम् ।

---

[9]अथात्र ब्राह्मणम्—द्वेधा वा इत्यादि ॥ अग्निं चिक्यानस्य चितवतः यश इन्द्रियं च द्वेधा गच्छति तमग्निं वा गच्छति ईजानं वा अनग्निकेन क्रतुना इष्टवन्तं न सर्वथाऽग्निचितम् । उभयत्र लिटः कानजादेशः । तस्मादेताभिः 'यास्ते अग्ने' इत्यादिभिराहुतिभिः यश इन्द्रियं चात्मनि स्थापयति, ततो नान्यं गच्छति ॥

[10]ईश्वरो वा इति ॥ 'ईश्वरे तोसुन्कसुनौ' इति हेतौ शता । चयनेन हेतुना अग्निमतिक्रामति । आरोहति वारुण्या* । उ-

---

*सं. २-१-११.

णा वन्दमान इति वारुण्यर्चा॥२७
जुहुयाच्छान्तिरेवैषाऽग्नेर्गुप्तिरात्मनो
हविष्कृतो वा एष योऽग्निं चिनुते
यथा वै हविस्स्कन्दत्येवं वा एष स्क-
न्दति योऽग्निं चित्वा स्त्रियमुपैति मै-

चिन्वन् । अधिक्रामतीत्यधि—क्रामति । तत् । त्वा । यामि । ब्रह्मणा । वन्दमानः । इति । वारुण्या । ऋचा ॥ २७॥ जुहुयात् । शान्तिः । एव । एषा । अग्नेः । गुप्तिः । आत्मनः । हविष्कृत इति हविः—कृतः । वै । एषः । यः । अग्निम् । चिनुते । यथा । वै । हविः । स्कन्दति । एवम् । वै । एषः । स्कन्दति । यः । अग्निम् । चि-

दात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्, 'उदात्तयणः' इति विभक्तेः । एषा सञ्चिताहुतिरग्नेश्शान्तिः अधिक्रमणदोषशान्तिहेतुरात्मनश्च गुप्तिः रक्षाहेतुः ॥

हविष्कृतो वा इत्यादि ॥ एष हविष्कृतः निर्वर्तितहवीरूप इति यावत् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—हविष्कृतः कृतहविः भावप्रधानो हविश्शब्दः । 'जातिकालसुखादिभ्यः परवचनम्' इति परनिपातः । हविस्थानीयोऽयमग्निश्चिन्वानः तस्मात् हविस्कन्दनं यथा दोषवदेवमस्याः स्त्रिया

त्रावरुण्याऽऽमिक्षया यजेत मैत्राव-
रुणतामेवोपैत्यात्मनोऽस्कन्दाय यो
वा अग्निमृतुस्थां वेदर्तुरृतुरस्मै
कल्पमान एति प्रत्येव तिष्ठति सं-

त्वा । स्त्रियम् । उपैतीत्युप-एति । मैत्रावरुण्येति
मैत्रा-वरुण्या । आमिक्षया । यजेत । मैत्रावरुण-
तामिति मैत्रा-वरुणताम् । एव । उपेति । एति ।
आत्मनः । अस्कन्दाय । [12]यः । वै । अग्निम् ।
ऋतुस्थामित्यृतु-स्थाम् । वेद । ऋतुरृतुरित्यृतुः-
ऋतुः । अस्मै । कल्पमानः । एति । प्रतीति । एव ।
तिष्ठति । [13]संवत्सर इति सं-वत्सरः । वै । अग्निः ।

उपायनम् । तस्मान्मैत्रावरुण्याऽऽमिक्षया यजेतेति विधिः । अनूबन्ध्यास्थानीयं विधीयते मैत्रावरुणम् । तामिति । मित्रावरुणयोर्भागो मैत्रावरुणः । तद्भावमुपैति स्कन्दनम् । ततश्च हुतकल्पत्वात् स्कन्दनदोषो नास्यात्मनः । यद्वा—स्वार्थिकोऽण्—मित्रावरुणभावमुपैति । ततश्च तद्भावेन स्थितत्वादात्मनः स्कन्दने दोषाप्रसङ्ग इति ॥

[12]यो वा अग्निमित्यादि ॥ ऋतुषु वसन्तादिषु तिष्ठतीत्यृतुस्था । आकारान्तलक्षणः कः । ऋतुरृतुः सर्वः ऋतुः अस्मै यजमानाय कल्पमानः संवर्धमान एति प्रवर्तते । प्रतितिष्ठति यजमानः ॥

[13]संवत्सरो वा इत्यादि ॥ गतम्* ॥

*सं. ५-६-१०.

वँथ्सरो वा अ॒ग्निः ॥ २८ ॥ ऋ॒तु-
स्थास्तस्यं वस॒न्तश्शिरों ग्री॒ष्मो द-
क्षिणः प॒क्षो व॒र्षाः पुच्छꣳ श॒रदुत्तं-
रः प॒क्षो हेम॒न्तो मध्यं पूर्वप॒क्षाश्चि-
तंयोऽपरप॒क्षाः पुरींषमहोरा॒त्राणीष्टं-
का ए॒ष वा अ॒ग्निर् ऋ॒तुस्था य ए॒वं
वेद॒र्तुर्ऋ॒तुरस्मै कल्पंमान एति॒ प्र-
त्ये॒व तिंष्ठति प्र॒जापंति॒र्वा ए॒तं ज्यै-

॥ २८ ॥ ऋ॒तु॒स्था इत्यृ॒तु–स्थाः । तस्यं । वस-
न्तः । शिरंः । ग्री॒ष्मः । दक्षिणः । प॒क्षः । व॒र्षाः ।
पुच्छम् । श॒रत् । उत्तंर॒ इत्युत्–त॒रः । प॒क्षः । हेम-
न्तः । मध्यंम् । पू॒र्वप॒क्षा इतिं पूर्व–प॒क्षाः । चितं-
यः । अपरपक्षा इत्यंपर–प॒क्षाः । पुरींषम् । अ॒हो-
रा॒त्राणीत्यंहः–रा॒त्राणिं । इष्टंकाः । ए॒षः । वै । अ॒-
ग्निः । ऋ॒तु॒स्था इत्यृ॒तु–स्थाः । यः । ए॒वम् । वेदं ।
ऋ॒तुर्ऋ॒तुरित्यृ॒तुः–ऋ॒तुः । अ॒स्मै । कल्पंमानः ।
ए॒ति॒ । प्रतीतिं । ए॒व । तिष्ठ॒ति । [14] प्र॒जापंति॒रितिं प्र॒जा–

[14] प्रजापतिर्वा इत्यादि ॥ एवमृतुस्थां अग्निं ऋतुषु न्यधत्त । गतमन्यत् ॥

इति पञ्चमे सप्तमे षष्ठोनुवाकः.

ष्ठ्यंकामो न्यंधत्त ततो वै स ज्यै-
ष्ठ्यमगच्छद्य एवं विद्वानग्निं चिनुते
ज्यैष्ठ्यमेव गच्छति ॥ २१ ॥
यदाकूताथ्समसुंस्रोद्धृदो वा मनसो

पतिः । वै । एतम् । ज्यैष्ठ्यकाम इति ज्यैष्ठ्य-काम्ः । नीति । अधत्त । ततः । वै । सः । ज्यै-ष्ठ्यम् । अगच्छत् । यः । एवम् । विद्वान् । अ-ग्निम् । चिनुते । ज्यैष्ठ्यम् । एव । गच्छति ॥२१॥

पृथिवीं यच्छ यत्स्वयमातृण्णा उपधाय धे-
ह्यृचाऽग्निरग्निं चिनुते त्रीणि च ॥६॥

[1]यत् । आकूतादित्या-कूतात् । समसुंस्रोदिति सं-असुंस्रोत् । हृदः । वा । मनसः । वा । सम्भृ-

[1]दशाग्निकानि समिष्टयजूंषि जुहोति—यदाकूतादित्यादीनि ॥ आद्याश्चतस्रः त्रिष्टुभः । अन्या अनुष्टुभः । तत्र प्रथमा—आ-कूतिः संकल्पः प्रत्ययः 'अक्षयं सुखमाप्नवानि' इत्येवंरूपः । हृदयं चित्तं श्रुतिस्मृत्यादि तत्साधनोपायचिन्तनम् । मनः अन्तः-करणं तदनुकूलप्रतिकूलेषु प्रवृत्तिनिवृत्त्यात्मकम् । चक्षुर्ग्रहणेन द-शेन्द्रियाणि लक्ष्यन्ते यानि सम्यगनुष्ठानेन अभिमतं लाभं साध-यन्ति । एतेष्वाकूत्यादिषु संभृतं एभिः प्रत्ययैः चिरकालविषयीकृतं

वा संभृतं चक्षुषो वा । तमनु प्रेहि
सुकृतस्य लोकं यत्र ऋषयः प्रथम-
जा ये पुराणाः । एतꣳ सधस्थ प-
रि ते ददामि यमावहाच्छेवधिं जा-

तमिति सं-भृतम् । चक्षुषः । वा । तम् । अनु । प्रेति । इहि । सुकृतस्येति सु-कृतस्य । लोकम् । यत्र । ऋषयः । प्रथमजा इति प्रथम-जाः । ये । पुराणाः । [2]एतम् । सधस्थेति सध-स्थ । परीति । ते । ददामि । यम् । आवहादित्या-वहात् । शेव-

गेदेतेभ्यः समभृत्वेत् भृतं सम्यक्परिनिष्पन्नम् । ल्यब्लोपे पञ्चमी । एतानि प्राप्य निष्पन्नं इदानीमिति । स्नुवतेर्लुङि शपश्लुः । तं अभिप्रेतमर्थं अनु लक्षीकृत्य प्रेहि गच्छ । कीदृशमित्याह—सुकृतस्य लोकं सुकृतफलभोगस्थानं यत्र सुकृतिन एव गच्छन्ति तत् स्थानं गच्छ—हे यजमान । देहपातोत्तरकालमिति सामर्थ्यात् गम्यते । 'सूपमानात्क्तः' इति सुकृतशब्दोऽन्तोदात्तः । पुनश्च विशेष्यते—यत्रासन प्रथमजाः नित्याः स्वयम्भुप्रभृतयः ऋषयो द्रष्टारः ये च पुराणाः पूर्वमुक्ता नः पूर्वे वा अस्माकं पित्रादयः तत् स्थानं गच्छेति ॥

[2]अथ द्वितीया—एतमिति ॥ अग्निरामन्त्र्यते—हे अग्ने सधस्थ सहस्थानस्थित पृथिव्यामेतावन्तं कालमनेन सहस्थित । 'सधमादस्थयोः' इति सहशब्दस्य सधादेशः । इदानीं गच्छते तुभ्य-

तवेदाः । अन्वागन्ता यज्ञपतिर्वो अ-
त्र तꣳ स्म जानीत परमे व्योमन्न् ।
जानीतादेनं परमे व्योमन्देवास्स-

धिस्थिति शेव-धिम् । जातवेदा इति जात-वेदाः।
अन्वागन्तेत्यनु-आगन्ता । यज्ञपतिरिति यज्ञ-प-
तिः । वः । अत्र । तम् । स्म । जानीत । परमे ।
व्योमन्निति वि-ओमन्न् । [3]जानीतात् । एनम् ।

मेनं यजमानं परिददामि रक्षार्थं तव हस्ते करोमि तत्रापि सहा-सने स्थातुमिति भावः । रक्षामिदानीं प्रार्थयते—जातवेदाः जा-तप्रज्ञानः रक्षणोपायज्ञः त्वं शेवधिं निधिस्थानं यमावहात् आ-वहसि निधिमिव परिगृह्णासि गोपायसि च तं परिददामीति । वहे-र्लेटि पुरुषव्यत्ययः, आडागमश्च । इदानीं देवा आमन्त्र्यन्ते—हे देवाः यूयमपि शृणुत अयं यज्ञपतिर्यजमानः वः युष्मानन्वागन्ता युष्मान्गच्छतोन्वागन्ता अनन्तरमेवानुक्रमेण आगमिष्यति । 'न लुट्' इति निघातप्रतिषेधः । 'तास्यनुदात्तेत्' इति लसार्वधातु-कस्यानुदात्तत्वं, टिलोप उदात्तनिवृत्तिस्वरेण तस्यैवोदात्तत्वं, 'गति-र्गतौ' इति प्रथमस्य गतेरनुदात्तत्वम्, 'तिङि चोदात्तवति' इति द्वितीयस्य 'उदात्तवता तिङा' इति 'गतिमता च' इति द्वयं समस्यते । तत्र परमे व्योम्नि प्रशस्ते निधिलक्षणे च पुण्यलोके युष्मानन्वागन्तारं जानीत प्रविष्टवानयमस्य स्थानमिति तमेनं स्वी-कुरुत । स्मेति पादपूरणे, सामप्रतीकत्वं वा द्योतयति ॥

[3]अथ तृतीया—जानीतादिति ॥ हे देवाः प्रथमं तावदेनं परमे

धस्था विद रूपमस्य । यदागच्छात् ॥३०॥ पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै । सं प्र च्यवध्वमनु सं

परमे । व्योमन्निति वि-ओमन् । देवाः । सधस्था इति सध-स्थाः । विद । रूपम् । अस्य । यत् । आगच्छादित्या-गच्छात् ॥ ३० ॥ पथिभिरिति प-थि-भिः । देवयानैरिति देव-यानैः । इष्टापूर्ते इतीष्टा-पूर्ते । कृणुतात् । आविः । अस्मै । [4]सम् ।

व्योमन्-स्थाने आगतं जानीतात् जानीत 'तस्य तात्' इति तादेशः । अनन्तरं चेह सधस्थाः सहासने स्थातारः अत एव अस्य रूपं विद जानीत कीदृशोयमिति विदितरूपविशेषमेनं कुरुत । 'विदो लटो वा' इत्याकारादेशः । तत्र यद्ययं देव-यानैः पथिभिरागच्छात् आगतस्स्यात् । पूर्ववदाडागमः । ततोऽस्मै इष्टापूर्ते इष्टापूर्तफले आविष्कृणुतात् आविष्कृणुत एतदर्थमिष्टापूर्ते च गतवान्, ईदृशं च तयोः फलमिति । पूर्ववत्तादेशः । इष्टं देवेभ्यः । पूर्तं पितृभ्यः । छान्दसं पूर्वपदस्य दीर्घत्वम् । अत्र देवा इति पादादित्वान्न निहन्यते, 'विभाषितं विशेषवचने' इति तस्याविद्यमानवत्त्वनिषेधाद्द्वितीयमामन्त्रितं न निहन्यते । 'आमन्त्रितं पूर्वमविद्यमानवत्' इति द्वयोरप्यविद्यमानवत्त्वात् तेनाख्यातं निहन्यते ॥

[4]अथ चतुर्थी—सं प्र च्यवध्वमिति ॥ व्याख्यातेयं 'अग्ने यु-

प्र यातामे पथो देवयानान्कृणुध्वम्।
अस्मिन्थ्सधस्थे अध्युत्तरस्मिन्विश्वे
देवा यजमानश्च सीदत । प्रस्तरेण
परिधिना स्रुचा वेद्या च बर्हिषा ।
ऋचेमं यज्ञं नो वह सुवर्देवेषु गन्त-

प्रेति । च्यवध्वम् । अन्विति । सम् । प्रेति । या-त । अग्ने । पथः । देवयानानिति देव-यानान् । कृणुध्वम् । अस्मिन् । सधस्थ इति सध-स्थे । अधीति । उत्तरस्मिन्नित्युत्-तरस्मिन् । विश्वे । देवाः । यजमानः । च । सीदत । प्रस्तरेणेति प्र-स्तरेण । परिधिनेति परि-धिना । स्रुचा । वेद्या ।

नजिम*[*] इत्यत्र । हे अग्ने विश्वे देवाः सर्वे यूयं यजमानश्च इत्थं कृतसंवादा इदानीं संप्रच्यवध्वं सम्यगस्मात् स्थानात् प्रचलत । अनन्तरं च संप्रयात सहिता एव गच्छत । गच्छन्तश्च देवयानेनैव पथः कृणुध्वम् अन्यैः पथिभिः न गन्तव्यम् । एवमस्मिन् सधस्थे सहस्थाने लोके उत्तरस्मिंश्च द्युलोके इदानीं देहपातोत्तरकालं च सीदत परस्परस्योपकुर्वन्तो वर्तध्वमिति ॥

अथ पञ्चमी—प्रस्तरेणेति ॥ प्रस्तरादिभिः सह इममस्माकं यज्ञं वह प्रापय देवान् देवेष्विति विभक्तिव्यत्ययः । स्रुग्ग्रहणं

*सं. ४-७-१३.

व । यदिष्टं यत्परादानं यद्दत्तं या च

दक्षिणा । तत् ॥ ३१ ॥ अग्निर्वैश्व-

कर्मणस्सुवर्देवेषु नो दधत् । येना

सहस्रं वहसि येनाग्ने सर्ववेदसम् ।

तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे ।

च । बर्हिषा । ऋचा । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु । गन्तवे । यत् । इष्टम् । यत् । परादानमिति परा-दानम् । यत् । दत्तम् । या । च । दक्षिणा । तत् ॥ ३१ ॥ अग्निः । वैश्वकर्मण इति वैश्व-कर्मणः । सुवः । देवेषु । नः । दधत् । येन । सहस्रम् । वहसि । येन । अग्ने । सर्ववेद-

पात्राणामप्युपलक्षणम् । ग्रहणमन्त्राणां प्रयोजनं चाह—सुवर्गन्तवे अस्माकं स्वर्गगमनाय । तुमर्थे तवेन् प्रत्ययः ॥

षष्ठी—यदिष्टमिति ॥ यदिष्टं देवेभ्यो दत्तं दर्शपूर्णमासादिषु यत्परादानं नात्यादरेण दत्तं दीनान्धकृपणादिभ्यः यद्दत्तं समीचीनं बहिर्वेदि यागे च दक्षिणा अन्तर्वेदि यद्दत्तं तत् सर्वं वैश्वकर्मणोऽग्निरस्माकं स्वर्गहेतुर्देवेषु. दधत् स्थापयतु स्वर्गसाधनमेव सर्वं करोतु । लेट्याडागमः ॥

सप्तमी—येना सहस्रमिति ॥ ........* ॥

---

*अत्र सप्तममन्त्रस्य भाष्यं अष्टममन्त्रावतारिका च गलिता.

वे । येनाग्ने दक्षिणा युक्ता यज्ञं व-
हन्त्यृत्विजः । तेनेमं यज्ञं नो वह
सुवर्देवेषु गन्तवे । येनाग्ने सुकृतः
पथा मधोर्धारा व्यानशुः । तेनेमं
यज्ञं नो वह सुवर्देवेषु गन्तवे । यत्र
धारा अनपेता मधोर्घृतस्य च याः ।

समितिं सर्व-वेदसम् । तेन । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु । गन्तवे । [8]येन । अग्ने । दक्षिणाः । युक्ताः । यज्ञम् । वहन्ति । ऋत्विजः । तेन । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु । गन्तवे । [9]येन । अग्ने । सुकृत इति सु-कृतः । पथा । मधोः । धाराः । व्यानशुरिति वि-आनशुः । तेन । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु ।

[8]हे अग्ने येन पथा युक्ता योग्या दक्षिणा यज्ञं च ऋत्विजो वहन्ति । यद्वा—दक्षिणाभिर्युक्त इत्युभयत्र व्यत्ययः । तेनेत्यादि । गतम् ॥

[9]नवमी—येनाग्ने सुकृत इति ॥ हे अग्ने येन पथा सुकृतः मधोः मधुरस्य धारा व्यानशुः व्याप्नुवन् । व्यत्ययेन परस्मैपदम् । यद्वा—सुकृतः देवाः येन पथा नीताः मधोः मधुरसस्य घृतस्य धारा व्यानशुः व्यश्नवते । छान्दसो लिट् । तेनेत्यादि । गतम् ॥

तदग्निर्वैश्वकर्मणस्सुवर्देवेषु नो दधत् ॥ ३२ ॥
यास्ते अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः । ये ते

गन्तवे । [10]यत्रं । धारांः । अनंपेता इत्यनंप-इताः । मधोंः । घृतस्यं । च । याः । तत् । अग्निः । वैश्वकर्मण इति वैश्व-कर्मणः । सुवंः । देवेषु । नः । दधत् ॥ ३२ ॥

आप्रस्थाचाङ्घ्यांनशुस्तेनेमं यज्ञं नों वह सुवर्देवेषु गन्तवे चतुर्दश च ॥ ७ ॥

[1]याः । ते । अग्ने । समिध इति सं-इधः । यानि । धामं । या । जिह्वा । जातवेद इति जात-

[10]दशमी—यत्रेति ॥ यत्र पथि मधोः घृतस्य च या धारा अनपेताः तत्र लोके देवेषु स्थापयतु किं मधोः घृतस्य च धाराः अनुपक्षीणाः देवयोग्याश्च करोत्वित्यर्थः ॥

इति प्रथमे सप्तमे सप्तमोनुवाकः.

[1]स्त्रगंर्चाति जपति—यास्त इति त्रिष्टुभा ॥ हे अग्ने जातवेदः जातप्रज्ञ जातधन वा यास्तव समिधः समिन्धनानि यानि च धाम धामानि जन्मस्थानानि । 'सुपां सुलुक्' इति लुक्,

अग्ने मेडयो य इन्दवस्तेभिरात्मानं
चिनुहि प्रजानन्न् । उत्सन्नयज्ञो वा
एष यदग्निः किं वाऽहैतस्यं क्रियते
किं वा न यद्वा अध्वर्युरग्नेश्चिन्वन्न-
न्तरेत्यात्मनो वै तदन्तरेति । यास्ते
अग्ने समिधो यानि ॥ ३३ ॥ धा-

वेदः । यः । अर्चिः । ये । ते । अग्ने । मेडयः । ये । इन्दवः । तेभिः । आत्मानम् । चिनुहि । प्र-जानन्निति प्र-जानन्न् । उत्सन्नयज्ञ इत्युत्सन्न-यज्ञः । वै । एषः । यत् । अग्निः । किम् । वा । अहं । एतस्यं । क्रियते । किम् । वा । न । यत् । वै । अध्वर्युः । अग्नेः । चिन्वन्न् । अन्तरेतीत्यन्तः-एति । आत्मनः । वै । तत् । अन्तः । एति । याः ।

यश्चार्चिः दीप्तिः हे अग्ने अङ्गनादियुक्त । ये च मेडयः शब्दाः चमनाममूपमितमिदम् । ये ते च इन्दवः विप्रुषः तेभिस्तैस्सर्वैः स्वयमेवात्मानं चिनुहि । 'उतश्च प्रत्ययाच्छन्दो वा वचनम्' इति हेर्लोपाभावः । प्रजानन् प्रकृष्टः ज्ञाता । कोन्यस्त्वदृते त्वां चेतुं शक्नुयादिति भावः । तेभिरिति । 'बहुलं छन्दसि' इति ऐस-भावः, 'नपुंसकमनपुंसकेन' इति नपुंसकं शिष्यते ॥

[2]अथात्रैव ब्राह्मणम्—उत्सन्न यज्ञ इत्यादि ॥ व्याख्यातम्* ।

*सं. ५-३-१.

मेत्याहैषा वा अग्नेस्स्वयंचितिरग्नि-
रेव तदग्निं चिनोति नाध्वर्युरात्म-
नोन्तरेति चतस्र आशाः प्र चर-
न्त्वग्नयं इमं नो यज्ञं नयतु प्रजान-
न्। घृतं पिन्वन्नजरꣳ सुवीरं ब्रह्म

ते । अग्ने । समिध इति सं-इधः । यानि ॥३३॥
धाम । इति । आह । एषा । वै । अग्नेः । स्वयं-
चितिरिति स्वयं-चितिः । अग्निः । एव । तत् ।
अग्निम् । चिनोति । न । अध्वर्युः । आत्मनः ।
अन्तः । एति । [3]चतस्रः । आशाः । प्रेति । चर-
न्तु । अग्नयः । इमम् । नः । यज्ञम् । नयतु । प्र-
जानन्निति प्र-जानन् । घृतम् । पिन्वन् । अज-

पुरुषबुद्ध्यविषयत्वेन ज्ञानवत्त्वस्य परिहृतत्वात् अध्वर्योरात्मैकदेशा-
न्तरस्याभावः ॥

[3]कूर्मोपधानमन्त्रः—चतस्र आशा इति त्रिष्टुप् ॥ चतस्र आशा दिशः अग्नयः प्रचरन्तु प्रकाशनार्थाय स्वर्गं गच्छतोस्य । अयं च कूर्मः इममस्माकं यज्ञं स्वर्गं नयतु प्रापयतु प्रजानन् प्रकृष्टो ज्ञाता घृतमुदकं अजरं अविनाशं सुवीर्यं च शोभनवीर्यं च पिन्वन् सिञ्चन् इमं यज्ञं नयत्विति । ब्रह्मैव समिन्धनं भवतु आहुतीनामग्नीनां प्रचरताम् । आहूयन्ते याभ्य

समिद्धंवत्याहुंतीनाम् । सुवर्गाय वा
एष लोकायोपं धीयते यत्कूर्मश्चतं-
स्र आशाः प्र चरन्त्वग्नय इत्याह
॥ ३४ ॥ दिशं एवैतेन प्र जानातीं-
मं नों यज्ञं नयतु प्रजानन्नित्याह सु-
वर्गस्यं लोकस्याभिनीत्यै ब्रह्म स-
मिद्धंवत्याहुंतीनामित्याह ब्रह्मणा वै

रम् । सुवीरामेतिं सु-वीरम् । ब्रह्म । समिदिति सं-
इत् । भवति । आहुंतीनामित्या-हुतीनाम् । [4]सुव-
र्गायेतिं सुवः-गार्यं । वै । एषः । लोकाय । उपेतिं ।
धीयते । यत् । कूर्मः । चतस्रः । आशाः । प्रेतिं ।
चरन्तु । अग्नयः । इतिं । आह ॥ ३४ ॥ दिशः ।
एव । एतेन । प्रेतिं । जानाति । इमम् । नः । य-
ज्ञम् । नयतु । प्रजानन्निति प्र-जानन् । इतिं । आ-
ह । सुवर्गस्येति सुवः-गस्यं । लोकस्यं । अभिनी-
त्या इत्यभि-नीत्यै । ब्रह्म । समिदिति सं-इत् ।

इत्याहुतयोऽग्नयः । संप्रदाने क्तिन्, 'तादौ च' इति गतेः प्रकृ-
तिस्वरत्वम् ॥

[4]अथात्रैव ब्राह्मणम्—सुवर्गायेत्यादि ॥ गतम् । चतस्र इत्यादि ।
मन्त्रावयवानां स्तुतिः । अभिनीत्यै आभिमुख्येन नयनाय यत्

देवास्सुवर्गं लोकमायन् यद्ब्रह्मण्व-
त्योपदधाति ब्रह्मणैव तद्यजमान-
स्सुवर्गं लोकमेति प्रजापतिर्वा ए-
ष यदग्निस्तस्य प्रजाः पशवश्छन्दा-
ꣳसि रूपꣳ सर्वान् वर्णानिष्टकानां
कुर्याद्रूपेणैव प्रजां पशूञ्छन्दाꣳस्य-

भवति । आहुतीनामित्या—हुतीनाम् । इति । आह । ब्रह्मणा । वै । देवाः । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । यत् । ब्रह्मण्वत्येति ब्रह्मण्—वत्या । उपदधातीत्युप—दधाति । ब्रह्मणा । एव । तत् । यजमानः । सुवर्गमिति सुवः—गम् । लोकम् । एति । प्रजापतिरिति प्रजा—पतिः । वै । एषः । यत् । अग्निः । तस्य । प्रजा इति प्र—जाः । पशवः । छन्दाꣳसि । रूपम् । सर्वान् । वर्णान् । इष्टकानाम् । कुर्यात् । रूपेण । एव । प्रजामिति प्र—जाम् । पशून् । छन्दाꣳसि । अवेति । रुन्धे । अथो इति । प्रजाभ्य

ब्रह्मण्वत्या ऋचा 'चतस्र आशाः' इत्यनया, 'ब्रह्म समित् भवति' इत्यत्र दर्शनात् । 'अनो नुट्' ॥

प्रजापतिर्वा इत्यादि ॥ प्रजादीनि प्रजापते रूपाणि नः अस्मान् प्रजापत्यात्मनोऽग्नेरवयवभूतानां इष्टकानां सर्वान् सर्ववर्णान्

वं रुन्धेऽथो प्रजाभ्यं एवैनं पशुभ्य-
श्छन्दोभ्योऽवरुध्यं चिनुते॥ ३५ ॥
मयिं गृह्णाम्यग्रे अग्निꣳ रायस्पो-
षाय सुप्रजास्त्वायं सुवीर्याय। मयिं

इतिं प्र-जाभ्यः । एव । एनम् । पशुभ्य इतिं पशु-
भ्यः । छन्दोभ्य इति छन्दः-भ्यः । अवरुध्येत्यंव-
रुध्यं । चिनुते ॥ ३५ ॥

एति यास्ते अग्ने समिधो यान्यग्नय इत्याहे-
ष्टकानाꣳ षोडश च ॥ ८ ॥

[1]मयिं । गृह्णामि । अग्रे । अग्निम् । रायः ।
पोषाय । सुप्रजास्त्वायेतिं सुप्रजाः-त्वायं । सुवी-
र्यायेतिं सु-वीर्याय । मयिं । प्रजामितिं प्र-जाम्।

---

कुर्यात् लेखाभिः दक्षिणावृद्भिः तासां प्रजादिभावाय प्रजादीनां च सर्ववर्णत्वात् तथा कृते रूपेणैव प्रजादीनवरुन्धे । ततश्च प्राजापत्यात्माऽग्निः परिगृहीतो भवति । अथो अपि च प्रजादिभ्य एवादायाग्निः चितो भवति, प्रजादीनां इष्टकानां चैतत्स्वभावत्वात् ॥

इति पञ्चमे सप्तमे अष्टमोनुवाकः.

[1]आत्मन्यग्निं गृह्णीते—मयि गृह्णामीति द्वाभ्याम् ॥ त्रिष्टुप् पुरस्ताज्ज्योतिस्त्रिष्टुप् अक्षराधिका । अग्रे प्रथमं चयनात् पूर्व-

प्रजां मयि वर्चो दधाम्यरिष्टास्स्याम तनुवा सुवीराः। यो नो अग्निः पितरो हृथ्स्वन्तरमर्त्यो मर्त्याँ आविवेश। तमात्मन्परि गृह्णीमहे वयं

मयि। वर्चः। दधामि। अरिष्टाः। स्याम। तनुवा। सुवीरा इति सु-वीराः। [2]यः। नः। अग्निः। पितरः। हृत्स्विति हृत्-सु। अन्तः। अमर्त्यः। मर्त्यान्। आविवेशेत्या-विवेश। तम्। आत्मन्। परीति। गृह्णीमहे। वयम्। मा। सः। अस्मान्।

मेवाग्निं मयि गृह्णामि रायो धनस्य पोषाय पुष्टयर्थं शोभनापत्यत्वाय शोभनवीर्यत्वाय च। व्याख्यातानि पदानि। किं यजमानस्य रायस्पोषाय दद्युरिति, नेत्याह—मयि प्रजां प्रजादिकं च मयि वर्चो बलं च दधामि धारयेय मम तेजो माक्रमेदित्यनेन अभिप्रायेण मयि गृह्णामीति। 'यदध्वर्युरात्मन्' इत्यादिकं ब्राह्मणमिदानीमेव भविष्यति। किञ्च—सर्वेऽपि वयं पुत्रपौत्रादिसहिताः सुवीराश्शोभनापत्या अरिष्टा अनुपहिंसिताश्च तनुवा शोभनेन शरीरेण सहिताः सर्वे स्याम समर्थाश्च॥

[2]अथ द्वितीया—यो न इति॥ हे पितरः सर्वस्य पितरः। भूतेन्द्रियप्राणमनःप्रभृतीनामन्ते यो नोस्मान् हृत्सु हृदयादिषु अन्तर्मध्ये आविवेश अमर्त्यः अमरणधर्मा मर्त्यान् मरणशीलान् अस्मानाविवेश

मा सो अस्मा१ अंवहाय परां गा-
त् । यदंध्वर्युरात्मन्नग्निमगृंहीत्वाऽग्निं
चिनुयाद्योंस्य स्वोंऽग्निस्तमपि॥३६॥
यजंमानाय चिनुयादग्निं खलु वै
पशवोऽनूपं तिष्ठन्तेऽपक्रामुंका अ-

अवहायेत्यंव-हार्य । परेति । गात् । [3]यत् । अध्वर्युः । आत्मन् । अग्निम् । अगृंहीत्वा । अग्निम् । चिनुयात् । यः । अस्य । स्वः । अग्निः । तम् । अपीति ॥ ३६ ॥ यजंमानाय । चिनुयात् । अग्निम् । खलुं । वै । पशवंः । अनुं । उपेति । तिष्ठन्ते । अपक्रामुंका इत्यंप-क्रामुंकाः । अस्मात् ।

तं महानुभावमात्मनि वयं परिगृह्णीमहे । ननु चोक्तमन्तसविशेषेति तत्किमुच्यते आत्मनि परिगृह्णीमहे इति; अत्राभिप्रायमाह— सोऽस्मानपहाय त्यक्त्वा मा परागात् माऽन्यत्र गच्छत्विति । परिग्रहशब्देन अयमर्थो विवक्षित इति दर्शितं भवति ॥

[3]अथात्रैव ब्राह्मणम्—यदध्वर्युरित्यादि ॥ अग्निग्रहणविधानार्थम् । यद्यध्वर्युः आभ्यां मन्त्राभ्यां आत्मन्यग्निमगृहीत्वा अग्निं चिनुयात् योस्याध्वर्योः स्व आत्मनि योग्निः तमपि यजमानाय चिनुयात् चयने जह्यात् ततश्चेतमुपयान्तं पशवोनूपतिष्ठन्ते पश्चादनुद्रुत्य भजन्ते । संगतिकरण आत्मनेपदम् । एवमेतद्युक्तमिति खलुशब्देन द्योत्यते । ततश्च अस्याध्वर्योरपक्रामुकाः

स्मात्पशवस्स्युर्मयि गृह्णाम्यग्रे अ-
ग्निमित्याहात्मन्नेव स्वमग्निं दाधार
नास्मात्पशवोऽप क्रामन्ति ब्रह्मवा-
दिनो वदन्ति यन्मृच्चापश्चाग्नेरना-
द्यमथ कस्मान्मृदा चाद्भिश्चाग्निश्ची-

पशवः । स्युः । मयि । गृह्णामि । अग्रे । अग्निम् । इति । आह । आत्मन्न् । एव । स्वम् । अग्निम् । दाधार । न । अस्मात् । पशवः । अपेति । क्रामन्ति । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । यत् । मृत् । च । आपः । च । अग्नेः । अनाद्यम् । अथ । कस्मात् । मृदा । च । अद्भिरित्यत्-भिः । च । अग्निः । चीयते । इति । यत् । अद्भिरित्यत्-

अपक्रमणशीलाः पशवस्स्युः । छान्दस उकञ् । मयि गृह्णामीत्यादिना. यथोक्तदोषाभावमाचष्टे । दाधारेति छान्दसो लिट् । धारयन्निति । 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् ॥

ब्रह्मवादिन इत्यादि ॥ मृच्च आपश्चेत्येतदुभयमग्नेरनाद्यमभक्ष्यम् । 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । अथ कस्मात्कारणादनेनाभिमतेन अग्निश्चीयते विरुद्धमिव लक्ष्यते एतदिति ब्रह्मवादिन आहुः । उत्तरम्—यदद्भिरिति । यदद्भिर्मृदं संयौति मिश्रयति आपश्च सर्वदेवतार्थाः । तस्मात्तादृश्या मृदा चयनेन सर्वाभिर्देव-

यत इति यदाद्भिस्संयौति ॥ ३७ ॥
आपो वै सर्वा देवता देवताभिरेवै-
नꣳ सꣳ सृजति यन्मृदा चिनोतीयं
वा अग्निर्वैश्वानरोऽग्निनैव तदग्निं
चिनोति ब्रह्मवादिनो वदन्ति यन्मृ-
दा चाद्भिश्चाग्निश्चीयतेऽथ कस्माद-

भिः । संयौतीति सं-यौति ॥ ३७ ॥ आपः । वै । सर्वाः । देवताः । देवताभिः । एव । एनम् । समिति । सृजति । यत् । मृदा । चिनोति । इयम् । वै । अग्निः । वैश्वानरः । अग्निना । एव । तत् । अग्निम् । चिनोति । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । यत् । मृदा । च । अद्भिरित्यत्-भिः । च । अग्निः । चीयते । अथ । कस्मात् । अग्निः । उच्य-

ताभिः एनमग्निं संसृजति संयोजयति । तस्मान्मृदा चाद्भिश्च अग्निश्चीयते; न किञ्चिदिह विरुद्धमिति ॥

[5]एवमद्भिश्चयनं प्रयोजनवदित्युक्तम् । इदानीं मृदा चयने यो गुणः तं दर्शयति—यन्मृदेत्यादि ॥ गतम् । ब्रह्मवादिन इत्यादि । पुनरपि पर्यनुयोगान्तरमत्र कुर्वन्ति—ब्रह्मवादिनः मृदा चाद्भिश्चीयमानोग्निः कस्मात्संबन्धादग्निरुच्यते । अद्भिर्मृदा काष्ठेन

ग्निरुच्यत इति यच्छन्दोभिश्चिनो-
त्यग्नयो वै छन्दाꣳसि तस्मादग्नि-
रुच्यतेऽथो इयं वा अग्निर्वैश्वानरो
यत् ॥ ३८ ॥ मृदा चिनोति तस्मा-
दग्निरुच्यते हिरण्येष्टका उप दधा-
ति ज्योतिर्वै हिरण्यं ज्योतिरेवास्मि-
न्दधात्यथो तेजो वै हिरण्यं तेज

ते । इति । यत् । छन्दोभिरिति छन्दः—भिः । चिनोति । अग्नयः । वै । छन्दाꣳसि । तस्मात् । अग्निः । उच्यते । अथो इति । इयम् । वै । अग्निः । वैश्वानरः । यत् ॥ ३८ ॥ मृदा । चिनोति । तस्मात् । अग्निः । उच्यते । [6]हिरण्येष्टका इति हिरण्य—इष्टकाः । उपेति । दधाति । ज्योतिः । वै । हिरण्यम् । ज्योतिः । एव । अस्मिन् । दधाति । अथो इति । तेजः । वै । हिरण्यम् । तेजः । एव ।

---

वा निष्पादितं हिरणमयं भवति, तत्त्वं च विरुद्धमिति । समाधत्ते—यच्छन्दोभिरित्यादि । गतम् ॥

[6]हिरण्येष्टका इत्यादि ॥ 'तेजोसि तेजो मे यच्छ'* इत्याद्या हिरण्येष्टकाः षष्ठे विहिताः पुनरिह विधीयन्ते अग्नेरात्मीयतासंपादना-

*सं. ५-७-६.

एवात्मन्धत्ते यो वा अग्निꣳ सर्वतो-
मुखं चिनुते सर्वासु प्रजास्वन्नमत्ति
सर्वा दिशोऽभि जयति गायत्रीं पु-
रस्तादुप दधाति त्रिष्टुभं दक्षिणतो
जगतीं पश्चादनुष्टुभमुत्तरतः पङ्क्ति

आत्मन्न् । धत्ते । [7]यः । वै । अग्निम् । सर्वतोमुख-
मिति सर्वतः–मुखम् । चिनुते । सर्वासु । प्रजास्विति
प्र–जासु । अन्नम् । अत्ति । सर्वाः । दिशः । अभी-
ति । जयति । [8]गायत्रीम् । पुरस्तात् । उपेति । द-
धाति । त्रिष्टुभम् । दक्षिणतः । जगतीम् । पश्चात् ।
अनुष्टुभमित्यनु–स्तुभम् । उत्तरत इत्युत्–तरतः ।

र्थम् । यद्वा—अत्रैवासां विधिः, षष्ठे तु क्रमविधिः । ज्योति-
र्वा इत्यादि । गतम् ॥

[7]यो वा अग्निमित्यादि ॥ सर्वासु दिक्षु मुखानि छन्दांसि यस्य स सर्वतोमुखः, सर्वासु वा दिक्षु मुखं चाग्नेरेभिः छन्दोभिः सर्वतोमुखः । सर्वास्विति निर्धारणे सप्तमी । सर्वासु प्रजासु मध्ये अतिशयेनान्नमत्ति । सर्वाश्च दिशोभिजयति ॥

[8]गायत्रीमित्यादि ॥ गतम् । अथो इत्यादि । परस्परसम्बद्धैः छन्दोभिश्चयनात् दिश्येव दिशं प्रवयति । तस्मादिदानीमपि दिशि अन्या दिक् प्रोतेव लक्ष्यते । सर्वा दिशः परस्परं प्रोता इव

मध्यं एष वा अग्निस्सर्वतोमुखस्तं य एवं विद्वाꣳश्चिनुते सर्वासु प्रजास्वन्नमत्ति सर्वा दिशोऽभि जयत्यथो दिश्येव दिशं प्र वयति तस्माद्दिशि दिक्प्रोता ॥ ३१ ॥

प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः

पङ्क्तिम् । मध्ये । एषः । वै । अग्निः । सर्वतोमुख इति सर्वतः–मुखः । तम् । यः । एवम् । विद्वान् । चिनुते । सर्वासु । प्रजास्विति प्र–जासु । अन्नम् । अत्ति । सर्वाः । दिशः । अभीति । जयति । अथो इति । दिशि । एव । दिशम् । प्रेति । वयति । तस्मात् । दिशि । दिक् । प्रोतेति प्र–उता ॥३१॥

अपि सं यौति वैश्वानरो यदेष वै पञ्चविꣳशतिश्च ॥ १ ॥

प्रजापतिरिति प्रजा–पतिः । अग्निम् । असृ-

भवन्ति । कोणासु दिक्षु अन्यासामनुप्रविष्टत्वात् प्रोता इत्युच्यन्ते । वेञः निष्ठायां संप्रसारणं, 'शतुरनुमः' इति गतेः प्रकृतिस्वरत्वम् ॥

इति पञ्चमे सप्तमे नवमोनुवाकः.

———

[1]प्रजापतेरित्यादि पशुशिरसां विधिः ॥ प्रजापतिना सृष्टोग्निरस्मात्प्रजापतेः प्राङ्मुखतः प्राद्रवत् । तस्मै तन्निवृत्त्यर्थं अश्वं

प्राङ्ङाद्रवत्तस्मा अश्वं प्रत्यास्यथ्स दक्षिणाऽवर्तत तस्मै वृष्णिं प्रत्यास्यथ्स प्रत्यङ्ङाऽवर्तत तस्मा ऋषभं प्रत्यास्यथ्स उदङ्ङाऽवर्तत तस्मै बस्तं प्रत्यास्यथ्स ऊर्ध्वोऽद्रवत्तस्मै पुरुषं प्रत्यास्यद्यत्पशुशीर्षाण्युपदधाति सर्वत एवैनम् ॥ ४० ॥ अवरुध्य

जत। सः। अस्मात्। सृष्टः। प्राङ्। प्रेति। अद्रवत्। तस्मै। अश्वम्। प्रतीति। आस्यत्। सः। दक्षिणा। एति। अवर्तत। तस्मै। वृष्णिम्। प्रतीति। आस्यत्। सः। प्रत्यङ्। एति। अवर्तत। तस्मै। ऋषभम्। प्रतीति। आस्यत्। सः। उदङ्। एति। अवर्तत। तस्मै। बस्तम्। प्रतीति। आस्यत्। सः। ऊर्ध्वः। अद्रवत्। तस्मै। पुरुषम्। प्रतीति। आस्यत्। यत्। पशुशीर्षाणीति पशु-शीर्षाणि। उपदधातीत्युप-दधाति। सर्वतः। एव। एनम् ॥ ४० ॥ अवरुध्ये-

प्रत्यास्यत् प्रातिकूल्येनाग्रतः क्षिप्तवान्, अश्वेन प्रतिरुद्धवानिति यावत्। ततस्सोग्निरावृत्य दक्षिणस्यां दिशि आवर्तत। ततो सकुं (?) तस्मै वृष्णिं प्रत्यास्यत्। एवं सर्वत्र। दक्षिणाद्वाच्। तस्मात्पशुशिरसामुपधानेन सर्वतो रुद्धस्य सर्वाभ्यो दिग्भ्यो निर्निरुद्धोग्निश्श्रितो भवति ॥

चिनुत एता वै प्राणभृतश्चक्षुष्मतीरि-
ष्टका यत्पशुशीर्षाणि यत्पशुशीर्-
षाण्युपदधाति ताभिरेव यजमानोऽ-
मुष्मिँल्लोके प्राणित्यथो ताभिरेवा-
स्मा इमे लोकाः प्र भान्ति मृदाऽभि-
लिप्योप दधाति मेध्यत्वाय पशुर्वा ए-

त्यव-रुध्य । चिनुत । [2]एताः । वै । प्राणभृत इति प्राण-भृतः । चक्षुष्मतीः । इष्टकाः । यत् । पशुशीर्षाणीति पशु-शीर्षाणि । यत् । पशुशीर्षाणीति पशु-शीर्षाणि । उपदधातीत्युप-दधाति । ताभिः । एव । यजमानः । अमुष्मिन् । लोके । प्रेति । अनिति । अथो इति । ताभिः । एव । अस्मै । इमे । लोकाः । प्रेति । भान्ति । [3]मृदा । अभिलिप्येत्यभि-लिप्य । उपेति । दधाति । मेध्यत्वायेति मेध्य-त्वाय । [4]पशुः । वै ।

[2]एता वा इत्यादि ॥ भूतपूर्वं प्राणभृत्त्वं चक्षुष्मत्त्वं च शिरस्सूपचर्यते । उपधेयत्वाच्चेष्टकात्वम् । तदुपधानेन यजमानोमुष्मिन् लोके प्राणिति जीवति । लोकाश्चेमे अस्मै प्रभान्ति प्रकर्षेण प्रकाशन्ते उपकारका भवन्ति ॥

[3]मृदाऽभिलिप्येति विधिः ॥

[4]पशुर्वा इत्यादि ॥ पशुशिरस्सु गुणविध्यर्थम् । पशुसाधनत्वात्

ष यद॒ग्निरन्नं॑ प॒शव॑ ए॒ष खलु॒ वा अ॒ग्नि-
र्यत्प॑शुशी॒र्॒षाणि॒ यं का॒मये॑त॒ कनी॑यो॒-
स्यान्नं॑म्॥४१॥स्या॒दिति॑ सन्त॒रां तस्य॑
पशु॒शी॒र्॒षाण्युप॑ दध्या॒त्कनी॑य ए॒वा-
स्यान्नं॑ भवति॒ यं का॒मये॑त स॒माव॑-
द॒स्यान्न॑ꣳ स्या॒दिति॑ मध्य॒तस्तस्योप॑

ए॒षः । यत् । अ॒ग्निः । अन्न॑म् । प॒शव॑ः । ए॒षः ।
खलु॑ । वै । अ॒ग्निः । यत् । प॒शु॒शी॒र्॒षाणीति॑ प-
शु–शी॒र्॒षाणि॑ । यम् । का॒मये॑त । कनी॑यः । अ॒-
स्य॒ । अन्न॑म् ॥ ४१ ॥ स्या॒त् । इति॑ । सं॒त॒राम्ति॑-
ति॑ सं–त॒राम् । तस्य॑ । प॒शु॒शी॒र्॒षाणीति॑ प॒शु॒–
शी॒र्॒षाणि॑ । उपेति॑ । द॒ध्या॒त् । कनी॑यः । ए॒व ।
अ॒स्य॒ । अन्न॑म् । भ॒व॒ति॒ । यम् । का॒मये॑त । स॒मा-
व॑त् । अ॒स्य॒ । अन्न॑म् । स्या॒त् । इति॑ । म॒ध्य॒तः ।

पशवोऽग्निः । अन्नसाधनत्वात् अन्नं पशवः । किञ्च—एषोऽग्निरेव पशुशीर्षाणि, अवयवावयविनोरभिन्नत्वात् पशुत्वस्य च समानत्वात् । तस्माद्यजमानमध्वर्युः कामयते कनीयोऽल्पतरं अस्यान्नं स्यादिति तस्य संतरां सन्निकृष्टतराणि पशुशीर्षाण्युपदध्यात् । 'किमेत्तिङव्यय' इत्यामुप्रत्ययः । कनीय एवेत्यादि । गतम् । समावत् समम् । समादावतुप् स्वार्थिकः । मध्यतो नातिसन्निकृष्टा

दध्यात्समावदेवास्यान्नं भवति यं कामयेत भूयोस्यान्नꣳ स्यादित्यन्तेषु तस्यं व्युदूह्योपं दध्यादन्तत एवास्मा अन्नमवं रुन्धे भूयोस्यान्नं भवति ॥ ४२ ॥

स्तेगान्दꣳष्ट्राभ्यां मण्डूकाञ्जम्भ्येभि-

तस्यं । उपेति । दध्यात् । समावत् । एव । अस्य । अन्नम् । भवति । यम् । कामयेत । भूयः । अस्य । अन्नम् । स्यात् । इति । अन्तेषु । तस्यं । व्युदूह्येति वि-उदूह्यं । उपेति । दध्यात् । अन्ततः । एव । अस्मै । अन्नम् । अवेति । रुन्धे । भूयः । अस्य । अन्नम् । भवति ॥ ४२ ॥

एनमस्यान्नं भूयोस्यान्नं भवति ॥ १० ॥

[1]स्तेगान् । दꣳष्ट्राभ्याम् । मण्डूकान् । जम्भ्ये-

दिक् । भूयः बहुतरम् । अन्तेष्वित्यादि । अन्तेषु प्रान्तेषु व्युदूह्य व्युदूह्योपदध्यात् । अन्ततो दिगन्तेभ्योस्मै यजमानायान्नमवरुन्धे । ततो बहुतरं तस्यान्नं भवति ॥

इति पञ्चमे सप्तमे दशमोनुवाकः.

---

[1]समन्तकः सब्राह्मणोऽग्निस्समाप्तः । अंतः परमश्वमेधकाण्डं वैश्वदेवम् । तत्र हविषा प्रचर्याज्यमवदानं कृत्वा 'स्तेगान्'

रार्दकां खादेनोर्ज॑ꣳ सꣳसूदेनार॑ण्यं जाम्बी॑लेन मृदं॑ बस्वैं॑भिश्शर्कं॑रा-भिरवं॑कामवं॑काभिश्शर्कं॑रामुथ्सादेनं॑

भिः । आर्दकाम् । खादेनं॑ । ऊर्ज॑म् । सꣳसूदेनेति॑ सं-सूदेनं॑ । अर॑ण्यम् । जाम्बी॑लेन । मृदं॑म् । बस्वैं॑भिः । शर्कं॑राभिः । अवं॑काम् । अवं॑काभिः । शर्कं॑राम् । उत्सादेनेत्यु॑त्-सादेनं॑ । जिह्वाम् । अ-

इत्यादिचतुर्दशभिरनुवाकैः प्रतिमन्त्रं शरीरहोमं जुहोति । अत्र द्वितीयया निर्दिष्टा देवताः स्तेगाद्याः । तृतीयानिर्दिष्टान्यश्वस्याङ्गानि दंष्ट्रादीनि । इमां देवतामनेन अश्वेन यजामीति होमकाले उभयं स्मर्तव्यमिति मन्त्राभिप्रायः । अत्र ब्राह्मणं 'वैश्वदेवो वा अश्वः । तं यत्प्राजापत्यं कुर्यात् । ....समदं दधाति'* इति । स्तेगाः क्षुद्रजन्तुविशेषाः गोकर्णकण्टका† इति प्रसिद्धाः । महाकण्टका इत्यन्ये । तदधिष्ठातृदेवता गृह्यते । दंष्ट्रे दन्ते उन्नते । मण्डूकाः प्रसिद्धाः । तद्दन्तमूलं जम्भः तत्र भवा जम्भ्याः पार्श्वदन्ताः । यद्वा—स्वार्थिको यत् । आदका भक्षयित्री प्राणाभिमानिनी देवता । पावकादित्वादित्वाभावः । खादः दन्तः येन खाद्यन्ते । करणे घञ्, 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । ऊर्क् रसः । तदभिमानिनी देवता सर्वत्र ग्राह्या । संसूदः सन्तत-क्षरणो नासिकादिः । थाथादिना उत्तरपदान्तोदात्तत्वम् । अरण्यं प्रसिद्धम् । जम्बीलं भक्षिततृणादि यत्र निधीयते आमा-

*ब्रा. ३-९-११. †श्वोकण्टका.

जि॒ह्वाम॑वक्र॒न्देन॒ ताल्॒ँ सर॑स्वतीं
जि॒ह्वाग्रे॑ण ॥ ४३ ॥
वाज॒ँ हनू॑भ्याम॒प आ॒स्ये॑नादि॒त्या-
ञ्छ्मश्रु॑भिरुपया॒मम॑ध॑रे॒णोष्ठे॑न॒ सदु॒त्त-

वक्र॒न्देनेत्य॑व–क्र॒न्देन॑ । ता॒लुम् । सर॑स्वतीम् । जि॒-
ह्वाग्रे॒णेति॑ जि॒ह्वा–अ॒ग्रेण॑ ॥ ४३ ॥

स्तेगान्द्वावि॑ँशतिः ॥ ११ ॥

वाज॑म् । हनू॑भ्या॒मिति॒ हनु॒–भ्या॒म् । अ॒पः ।
आ॒स्ये॑न । आ॒दि॒त्यान् । श्मश्रु॑भि॒रिति॒ श्मश्रु॑–
भि॒ः । उ॒प॒या॒ममित्यु॑प–या॒मम् । अध॑रेण । ओष्ठे॑-
न । सत् । उत्त॑रे॒णेत्यु॒त्–त॒रे॒ण । अन्त॑रेण । अ॒नू॒-

शय इति प्रसिद्धम् । मृत् प्रसिद्धा । वर्स्वः दन्तमूलमांसादी-
नि । शर्कराः तत्सदृशान्यस्थीनि । अवका अवित्री देवता
अग्निस्थानाभिमानिनी । पूर्ववदित्वाभावः । शैवालाभिमानिनी वा
गृह्यते । अवकाः शैवालसदृशानि मांसानि । अस्थिविशेषा इत्य-
न्ये । शर्कराः प्रसिद्धाः । उत्सादः उच्चप्रदेशः । जिह्वा प्रसि-
द्धा । अवक्रन्दः आन्तःकायिकः । तालुः शब्दाभिव्यक्तिस्थानं
जिह्वामूलम् । सरस्वतीं जिह्वाग्रेण । गतम् ॥

इति पञ्चमे सप्तमे एकादशोऽनुवाकः.

---

[1]वाजोऽन्नम् । हन्वादीनि प्रसिद्धानि । हनूभ्यामिति छान्दसं सां-
हितिकं दीर्घत्वम् । उपयामः पृथिवी । अधरेणोष्ठेन । गतम् ।

रेणान्तरेणानूकाशं प्रकाशेन बाह्य॑ स्तनयित्नुं निर्बाधेन सूर्याग्नी चक्षुर्भ्यां विद्युतौ कनानकाभ्यामशनिं मस्तिष्केण बलं मज्जभिः ॥१४॥

काशमित्यनु-काशम् । प्रकाशेनेति प्र-काशेन । बाह्यम् । स्तनयित्नुम् । निर्बाधेनेति निः-बाधेन । सूर्याग्नी इति सूर्य-अग्नी । चक्षुर्भ्यामिति चक्षुः-भ्याम् । विद्युताविति वि-द्युतौ । कनानकाभ्याम् । अशनिम् । मस्तिष्केण । बलम् । मज्जभिरिति म-ज्ज-भिः ॥ १४ ॥

वाजं पञ्चविंशतिः ॥ १२ ॥

'ओत्वोष्ठयोः' इति पररूपत्वम् । सत् द्यौः, सीदन्त्यस्यां पुण्यकृत इति । उत्तरेण ओष्ठेनेत्येव । अन्तरं ओष्ठयोर्मध्यम् । अनूकाशः द्यावापृथिव्योर्मध्यं, अनुक्रमेण काशन्ते भासन्ते अस्मिन् ज्योतींषि । 'इकः काशे' इति सांहितिकं दीर्घत्वम् । प्रकाशः आभ्यन्तरं प्रकाशस्थानम् । बाह्यं बहिर्भवं प्रकाशस्थानं दिगादिः । 'बहिषष्टिलोपो यञ्च' इति यञ् । स्तनयित्नुः प्रसिद्धः । निर्बाधः कनशब्दः । सूर्याग्नी चक्षुर्भ्याम् । गतम् । विद्युतौ वृष्टिरवृष्टिः । कनानके अक्षिस्थे कृष्णमण्डले । अशनिः प्रसिद्धः । मस्तिष्कः शिरोमांसम् । बलं मज्जभिः ॥

इति पञ्चमे सप्तमे द्वादशोनुवाकः.